आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १२१

# व्यवहारमाला ।

नाम धर्मशास्त्रग्रन्थः ।

सोऽयं

दक्षिणापथान्तर्गत--त्रिवाङ्कूरसंस्थानास्थानविदुषा वं० वङ्कट-

रामशर्मणा विद्याभूषणेन संशोधितः ।

स च

बी. ए. इत्युपपदधारिभिः

## विनायक गणेश आपटे

इत्येतैः

पुण्याख्यपत्तने

श्रीमन् ' महादेव चिमणाजी आपटे ' इत्यभिधेय-

महाभागप्रतिष्ठापिते

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितः ।

शालिवाहनशकाब्दाः १८६५ ।

खिस्ताब्दाः १९४३ ।



मूल्यमेको रूपकः ( १ ) ।

## व्यवहारमालाया विषयसमुद्देशः।


| विषयाः | पृष्ठाङ्काः। | विषयाः | पृष्ठाङ्काः। |
|---|---|---|---|
| व्यवहारदर्शनविधिः | १ | उद्ग्रहणाविधिः | ४० |
| प्राड्विवाकधर्माः | २ | जयपराजयदण्डविधिः | ४१ |
| सभ्यासभ्योपदेशः | ,, | ऋणादानप्रकरणम् | ,, |
| व्यवहारलक्षणम् | ५ | उपनिधिप्रकरणम् | ४२ |
| पक्षाभासलक्षणम् | ८ | अस्वामिविक्रयप्रकरणम् | ४३ |
| आसेधप्रकरणम् | ,, | संभूयसमुत्थानप्रकरणम् | ४४ |
| पुरुषान्तरनियोगविधिः | ९ | दत्ताप्रदानिकप्रकरणम् | ४६ |
| भाषोत्तरपादानिरूपणम् | १० | अभ्युपेत्याशुश्रूषाप्रकरणम् | ४८ |
| संधिप्रकरणम् | १४ | वेतनानपाकर्मप्रकरणम्। | ५२ |
| क्रियापादः | ,, | स्वामिपालविवादप्रकरणम् | ५४ |
| साक्षिनिरूपणम् | १५ | समयानपाकर्मप्रकरणम् | ५६ |
| लेख्यनिरूपणम् | २२ | विक्रीयासंप्रदानप्रकरणम् | ५७ |
| द्रव्यागमप्रकरणम् | २६ | क्रीत्वानुशयप्रकरणम् | ५९ |
| अनुभोगानुसिद्धिः | २७ | सीमाविवादप्रकरणम् | ६० |
| अन्यभोगापवादः | २९ | वाक्पारुष्यप्रकरणम् | ६३ |
| विच्छिन्नभोगनिर्णयः | ,, | दण्डपारुष्यप्रकरणम् | ६५ |
| कोशपानादिविधिः | ,, | स्तेयप्रकरणम् | ६८ |
| ऋणप्रयोगः | ३२ | साहसप्रकरणम् | ७४ |
| वृद्धिविधिः | ,, | स्त्रीसंग्रहणप्रकरणम् | ७७ |
| आधिविधिः | ३४ | दायविभागप्रकरणम् | ७९ |
| प्रातिभाविधिः | ३७ | द्यूतसमाह्वयप्रकरणम् | ९१ |
| ऋणस्य देयादेयविधिः | ,, | प्रकीर्णकप्रकरणम् | ९२ |


समाप्तोऽयं विषयसमुद्देशः।

# निवेदना ।

धर्मशास्त्रग्रन्थोऽयं व्यवहारमालाख्यो यथामति संशोधितः। देवनागरलिपिभिर्मुद्रयित्वा प्रकाश्यते । इयं चान्वर्थाभिधा व्यवहारमाला । या पदनीयान् व्यवहारान् न्यक्षेणानुक्रमेण च वितत्य मतभेदकथनपूर्वकं प्रतिपादयन्ती धर्मस्थीये विषयजाते व्युत्पित्सून् व्युत्पन्नान् कर्तुमलम् । मनुयाज्ञवल्क्यादिभिः प्राक्तनैराचार्यैराकरग्रन्थात्मना स्मृत्वा स्मृत्वा संदृब्धेषु स्वोपज्ञेष्वाचार–व्यवहार–प्रायश्चित्त–प्रकीर्णकादिविविधसंदर्भेषु, ये तावद्युक्तदण्डधरस्य राज्ञो व्यवहारनिर्णयप्रयोजकास्तदङ्गभूताश्च विधयः, त एव तेभ्य एवाऽऽकरग्रन्थेभ्यस्ताद्रूप्येण समुच्चित्य विभागशो विषयवैशद्येन चात्र ग्रन्थे सुष्ठु संकलिताः प्रायशो दृश्यन्ते । अयं चार्थो ग्रन्थोपक्रमस्थचिकीर्षितप्रतिज्ञापद्ये–

मनुमुख्यसरःसमुद्भवैः सुकुमारैः प्रसवैर्वचोमयैः ।
त्रिदिवाप्तिफलैर्नृपोचितां रचयामि व्यवहारमालिकाम् ॥

इति ग्रन्थकृतैव निरूपितः ।

व्यवहारशब्दो न्यायपर्यायः । स चान्यायनिवृत्त्यर्थं मन्वादिभिः शिष्टैः प्रवर्तितः । द्रष्टा च तस्य न्यायस्य राजा । अन्यायप्रवृत्तानां दण्डस्य धारयिता । सामर्थ्यात् स्वधर्मस्थानामनुग्राहकश्च । विवादपर्यायश्च दृश्यते । व्यवहारशब्दस्य व्युत्पत्तिश्चैवमुपदर्शिता–

"वि नानार्थेऽव संदेहे हरणं हार इष्यते ।
नानासंदेहहरणाद् व्यवहारस्ततः स्मृतः ॥" इति ।

प्रजापरिरक्षणं हि नाम राज्ञो धर्मः । प्रजानां रक्षणादवाप्तवृत्तिर्भवति राजा । तासामेवेतरेतरविवादजपीडापरिहारार्थमृणादानादिप्रकीर्णकपर्यन्ताष्टादशविधविवादे विरुद्धार्थार्थिप्रत्यर्थिवाक्यलेखादिप्रमाणजनितसंदेहहारी विचार एव व्यवहारपदार्थः । व्यवहारत एव राजा राष्ट्रं भर्तुं शक्तो भवति । व्यवहारमपश्यता राज्ञा न कदाचिदपि स्वस्थेन स्थातुं शक्यम् । तथा च सूक्तं विश्वरूपविकटोक्तिविस्तृतायां बालक्रीडायाम्–

इति संभृतमण्डलः सुधामा पुरुरुचिरो रमणः प्रतापशालिः ।
रविरिव नृपतिः समः प्रजानां जगदखिलं व्यवहारतो बिभर्ति ॥ इति ।

धर्मासनस्थो नृपतिः शास्त्रोक्तेनैव वर्त्मना विवादानुद्धरेत् । तथा कुर्वतो महीपालस्य--

संभवन्ति गुणाः सप्त सप्त वह्नेरिवार्चिषः ।
धर्मश्चार्थश्च कीर्तिश्च लोकपक्तिरुपग्रहः ॥
प्रजाभ्यो बहुमानं च स्वर्गस्थानं च शाश्वतम् ॥

अतः स्वराज्यपरिरक्षणरूपधर्मसम्यङ्निर्वृत्तय आत्मसंपद्युक्तो राजा साक्ष्याद्यनुयोगं व्यवहारान् पश्येत् । तादृशव्यवहारदर्शनोपदेशपरं चेदं शास्त्रमनर्थनिवर्तनद्वारेण धर्मसाधकं भवति । राजा च सर्वान् व्यवहारान् तत्त्वतो निर्णीय किल्बिषं व्यपोह्य स्वर्गादिप्राप्तिरूपामुत्कृष्टां गतिं लभते ।

किंचास्मिन्ग्रन्थ ऋणादानादिप्रकीर्णकान्तानामष्टादशधाभिन्नानां विवादपदानां निरूपणारम्भात्प्राग्विवादनिर्णयसौकर्यसंपादकं व्यवहारदर्शनाविधि—प्राड्विवाकधर्म—सभ्यासभ्योपदेश—व्यवहारलक्षण—पक्षाभासलक्षण—साक्षिस्वरूप—लेख्यस्वरूपादिकं प्रमेयजातमानुपूर्वीक्रमेण पूर्वाङ्गमर्यादयोपन्यस्तम् ।

प्रायशः संकलनात्मकेऽस्मिन्ग्रन्थे कात्यायनः, नारदः, मनुः, बृहस्पतिः, व्यासः, याज्ञवल्क्यः, हारीतः, पितामहः, विष्णुः, संवर्तकः, भरद्वाजः, प्रजापतिः, दक्षप्रजापतिः, कण्वः, वृद्धमनुः, शङ्खः, यमः, वसिष्ठः, उशना, विश्वामित्रः, गौतमः, आपस्तम्बः, बोधायनः, देवलः, सुमन्तुः हरिः, काश्यपः, अङ्गिरा इत्येते धर्मशास्त्रकाराः प्रमाणिता दृश्यन्ते । याज्ञवल्क्यश्च--

वक्तारो धर्मशास्त्राणां मनुर्विष्णुर्यमोऽङ्गिराः ।
वसिष्ठदक्षसंवर्तशातातपपराशराः ॥
आपस्तम्बोशनोव्यासाः कात्यायनबृहस्पती ।
गौतमः शङ्खलिखितौ हारीतोऽत्रिरहं तथा ॥

इति धर्मशास्त्रकारान् संख्यानियमतो निर्दिशति । वृद्धयाज्ञवल्क्यश्च--

नारदः पुलहो गार्ग्यः पुलस्त्यः शौनकः क्रतुः ।
बोधायनो जातुकर्णो विश्वामित्रः पितामहः ॥

इति पद्येन स्मृतिकारान्दर्शैवाऽऽह । कतिपयपूर्वाचार्यप्रकीर्तनमिदं याज्ञवल्क्यस्य वृद्धयाज्ञवल्क्यस्य वा तदुपजीव्यत्वमवगमयतीत्यवसातुमलम् । यद्यन्यानपि धर्मशास्त्रप्रवक्तॄनाचार्यांस्तावज्ज्ञास्यतामवश्यमस्मरिष्यताम् । न ह्येतावताऽन्येषां धर्मशास्त्रकाराणां सत्ता बाधिता । यत एतद्व्यतिरिक्ताश्चाऽऽचार्या दृश्यन्ते । येषां च ग्रन्थास्तत्र तत्र प्रकाशिताः । स्वसूभावसुलभतुल्यमहिमानो बहुलमुपलभ्यन्ते । उद्ध्रियन्ते चार्वाचीनैः शास्त्रकारैः । एतदवधिधर्मशास्त्रकाराणां संख्यानियमश्च नावधारित एव वर्तते ।

इतः शतकत्रयात्पूर्वं भारतसाम्राज्यमिदमाङ्ग्लेया(इङ्ग्ला)धिपत्यसाचिव्यमलभत। तदानीं हिन्दूनां(भारतीयानां) सामुदायिकेषु राष्ट्रियेषु व्यावहारिकेषु च विषयेषु विज्ञानरहितानां पश्चिमानां तेषां हिन्द्यासाम्राज्यभरणमतीव सौकर्यापेतमवर्तत। ततस्तेषां हैन्दवविज्ञानीयेषु परिचितिसिद्ध्यै तदात्वे गवर्णरजनरलपदमाधिष्ठिता वारणहस्तिङ्गसप्रभुवर्येण प्रथमतो वारणस्यां संस्कृतविद्यामन्दिरमेकं प्रस्थापितमभूत्। यत्र च जगन्नाथपण्डित-गङ्गाधरशास्त्रिप्रमुखाः श्रुतिस्मृतिविशारदा विद्वांस आचार्यकमलंचक्रुः। गैर्वाण्युपनिबद्धान् विविधशास्त्रमयान् ग्रन्थानाङ्ग्ल्या विपरिणमयितुं हिन्दुजनानुयोज्यानि नियमशास्त्राण्यारचयितुमाङ्ग्लानामन्येषां च श्रुतिस्मृत्यादिषु विज्ञानं संपादयितुं चोपयुक्ताः पद्धतयो रूपीकृताश्चाऽऽसन्।

आङ्ग्लेयाधिपत्यात्प्राग्भारतवर्षमिदं खण्डशो बहुभी राजभिर्भृतमासीत्। तेषां च महीक्षितां प्रजास्वितरेतरपीडायां तत्त्वनिर्णयार्थं व्यवहारदर्शनमत्यावश्यकमभूत्। अतिविततत्वाद्विमकीर्णविषयत्वाद् व्यवहारान्तःपातिबहुप्रमेयगर्भतया च मन्वादिस्मृतीनां राज्ञो व्यवहारदर्शनोपयोगिनमुपदेशमानुपूर्व्या प्रदातुं ता अप्रभविष्णव आसन्। तस्मात्प्रजाभृतामाज्ञातः स्वयं कौतुकाच्च धर्मशास्त्रनिष्णातैर्विपश्चिद्भिः प्राचीनस्मृतिग्रन्थेभ्यो व्यवहादर्शनोपदेशपरान् भागान् समुच्चित्य व्यवहारमालाख्योऽयं ग्रन्थ एतत्सजातीयाश्चान्ये बहवः संदर्भा निरमायिषत। इयं च व्यवहारमाला दक्षिणापथे प्रवृत्तचक्राणां केरलेश्वराणां मण्डलेषु प्रमाणतयोपयुक्ताऽभवदिति विज्ञायते। अस्याः कर्ता कः कत्यः कदा बभूवेत्यादिकं न त्ववगतम्।

कामं वर्षपूगात्प्रागस्य ग्रन्थस्य त्रय आदर्शा अस्माभिः समुपलब्धाः। ते च शुद्धप्रायाः केरलीयलिपयो द्वित्रशतवयसस्तालपत्रात्मका भूयसा संवदन्तश्च। यानवष्टभ्यास्य संशोधनकृत्यं निर्व्यूढं तत्र प्रथमः कन्याकुमारिसमीपवर्तिमहादानपुरग्रामाभिजनब्रह्मश्री काशि[नाथ]शास्त्रिमहाशयैः सादरं दत्तः कसंज्ञकः। द्वितीयः त्रिवाङ्कूरराष्ट्रीयतिरुवल्लाजनपदान्तर्गततोलशेरिप्रदेशाभिजनब्रह्मश्री—पी०सी०नारायणभट्टतिरितन्त्रिस्वामिकः खसंज्ञकः। तृतीयश्च तत्रैव प्रदेशे जराजर्जरितमहार्घग्रन्थरत्नावतंसितात् कुलिकाट्टुगृहादासादितोऽन्तविकलो गसंज्ञकः। आदर्शदानेनोपकृतवद्भ्यो महाशयेभ्यो बहु कं धारयामः। एष्वादर्शेषु गसंज्ञकः खसंज्ञकस्य प्रतिरूपमिति विज्ञायते। त्रिष्वप्येतेष्वादर्शेषु विरलतयैव दृष्टा भिन्नपाठाः। तेष्वादित्सिता एव पाठास्तत्र तत्र संनिवेशिताः।

ग्रन्थेऽस्मिन् संकलितेषु परमार्षवाक्येषु क्वचिच्छन्दाध्याहारः क्वचिदर्थाध्याहारश्चाऽऽवश्यकः। तादृशेषु स्थलेषु ग्रन्थान्तरप्रज्ञाततमत्वादनुक्तमाकाङ्क्ष्यमाणमर्थमञ्जसाऽवबोद्धुं ग्रन्थतात्पर्यविभावनपरभाषाटीकासचिवमस्य ग्रन्थस्य संस्करणम्, केरलभाषासाहित्यसाम्राज्यसार्वभौमायमानैः श्रीयुतपरमेश्वरार्यैः प्रसाधितम्, बहूपाकरोदित्यपि सकृतज्ञं स्मर्यते।

इदानीं महाजनसमक्षमुपायनीकृतेऽस्मिन् ग्रन्थेऽस्मादृशाल्पप्रज्ञसुलभा मुद्रणसंभवा वाऽशुद्धयो मानवीयज्ञानस्य स्खलनशीलतां विभाव्य मर्षणीयाः।

व्यवहारमालामिमामानन्दाश्रमग्रन्थावल्यामधिरोप्य प्रकाशयितुमनस आश्रमप्रवर्तकसमितेः, विशिष्य तत्कार्यदर्शिनां च भक्तिबहुमानपूतां कृतज्ञतां प्रकाशयामः। इतश्चोत्तरोत्तरमस्मिन्नाश्रमेऽपूर्वग्रन्थप्रकाशनपरिश्रमस्याभिवृद्ध्यै श्रुतिस्मृतिजनयितुर्भगवतो धर्मस्वरूपस्य स्वयंज्योतिषः प्रसादाः सन्त्विति परमाशास्महे।

---

| | |
|---|---|
| अनन्तशयनम्,<br>कोळम्बवर्षं | वे० वेङ्कटरामशर्मा विद्याभूषणः। |

ॐ तत्सद्ब्रह्मणे नमः ।

# व्यवहारमाला ।

## अथ व्यवहारदर्शनविधिः ।

नमस्ते नरसिंहाय भक्तानुग्रहकारिणे ।
अजाय बहुरूपाय सर्गस्थित्यन्तकारिणे ॥
मनुमुख्यसरस्समुद्भवैः सुकुमारैः प्रसवैर्वचोमयैः ।
त्रिदिवाप्तिफलैर्नृपोचितां रचयामि व्यवहारमालिकाम् ॥
मनुः प्रजापतिर्यस्मिन्काले राज्यमबूभुजत् ।
धर्मैकतानाः पुरुषास्तदाऽऽसन् सत्यवादिनः ॥
तदा न व्यवहारोऽभून्न द्वेषो नापि मत्सरः ।
नष्टे धर्मे मनुष्येषु व्यवहारः प्रकीर्तितः ॥
द्रष्टा च व्यवहाराणां राजा दण्डधरः स्मृतः ।

## सभा प्रवेशः ।

व्यवहारं दिदृक्षुस्तु ब्राह्मणैः सह पार्थिवः ।
मन्त्रज्ञैर्मन्त्रिभिश्चैव विनीतः प्रविशेत्सभाम् ॥
तत्राऽऽसीनः स्थितो वाऽपि पाणिमुद्यम्य दक्षिणम् ।
विनीतवेषाभरणः पश्येत् कार्याणि कार्यिणाम् ॥
प्रत्यहं देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः ।
अष्टादशसु मार्गेषु निबद्धानि पृथक्पृथक् ॥

## कार्यविस्तरारम्भः ।

धर्मासनमधिष्ठाय संवीताङ्गः समाहितः ।
प्रणम्य लोकपालेभ्यः कार्यदर्शनमारभेत् ॥
यथा नयत्यसृक्पातैर्मृगस्य मृगयुः पदम् ।
नयेत् तथानुमानेन धर्मस्य नृपतिः पदम् ॥
कात्यायनः—सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः ।
ससभ्यप्रेक्षको राजा स्वर्गे तिष्ठति धर्मतः ॥

---

१ ख. °रः कृतः । २ ख. °हारान् दि°

श्रुतिस्मृतिविरुद्धं च भूतानामहितं च यत्।
न तत् प्रवर्तयेद्राजा प्रवृत्तं च निवर्तयेत्॥

नारदः—धर्मार्थशास्त्रतत्त्वाभ्यामविरोधेन पार्थिवः।
परीक्षमाणो निपुणं व्यवहारगतिं नयेत्॥
दिवसस्याष्टमं भागं मुक्त्वा कालत्रयं च यत्।
स कालो व्यवहाराणां शास्त्रदृष्टः परः स्मृतः॥

इति व्यवहारदर्शनविधिः।

---

अथ प्राड्विवाकधर्माः।

मनुः—यदा स्वयं न कुर्यात्तु नृपतिः कार्यदर्शनम्।
तदा नियुञ्ज्याद्विद्वांसं ब्राह्मणं कार्यदर्शने॥
सोऽस्य कार्याणि संपश्येत्सभ्यैरेव त्रिभिर्वृतः।
सभामेव प्रविश्याग्र्यामासीनः स्थित एव वा।

बृहस्पतिः—विवादे पृच्छति प्रश्नं प्रतिप्रश्नं तथैव च।
प्रियपूर्वं प्राग्वदति प्राड्विवाकस्ततः स्मृतः।

नारदः—यथा शल्यं भिषक्कायादुद्धरेद्यन्त्रयुक्तितः।
प्राड्विवाकस्तथा शल्यमुद्धरेद् व्यवहारतः॥

कात्यायनः—यत्र विप्रो न विद्वान् स्यात् क्षत्रियं तत्र योजयेत्।
वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत्॥

व्यासः—द्विजान् विहाय यः पश्येत् कार्याणि वृषलैः सह।
तस्य प्रक्षुभ्यते राष्ट्रं बलं कोशं च नश्यति।

इति प्राड्विवाकधर्माः।

---

अथ सभ्यासभ्योपदेशः।

दुर्गमध्ये गृहं कुर्याज्जलपुष्पान्वितं पृथु।
प्राग्दिशि प्राङ्मुखीं तत्र कल्याणीं कल्पयेत् सभाम्।
माल्यधूपासनोपेतां बीजरत्नसमाकुलाम्।
प्रतिमालेख्यदेवैश्च युक्तामग्न्यम्बुना तथा॥

प्रतिष्ठिता चला चैव मुद्रिता शासिता तथा।
चतुर्विधा सभा प्रोक्ता सभ्याश्चैव तथाविधाः॥
प्रतिष्ठिता पुरे ग्रामे चला नामाप्रतिष्ठिता।
मुद्रिताध्यक्षसंयुक्ता राजयुक्ता च शासिता॥
नृपाधिकृतसभ्याश्च स्मृतिर्गणकलेखकौ।
हेमाग्न्यम्बुस्वपुरुषाः साधनाङ्गानि वै दश॥
एषां मूर्धा नृपोऽङ्गानां मुखं चाधिकृतः कृतः।
बाहू सभ्याः स्मृतिर्हस्तौ जङ्घे गणकलेखकौ॥
हेमाग्न्यम्बुदृशस्तत्र पादौ स्वपुरुषास्तथा।
दशानामपि चैतेषां कर्म प्रोक्तं पृथक् पृथक्॥
वक्ताऽध्यक्षो नृपः शास्ता सभ्याः कार्यपरीक्षकाः।
स्मृतिर्विनिर्णयं ब्रूते जयं दानं दमस्तथा॥
शपथार्थे हिरण्याग्नी तृषितक्षुब्धयोर्जलम्।
गणको गणयेदर्थं लिखेत् कार्यं च लेखकः।
प्रत्यर्थिसभ्यानयनं साक्षिणां च स्वपूरुषः॥
कुर्यादनर्गलौ रक्षेदर्थिप्रत्यर्थिनौ सदा।
एतद् दशाङ्गकरणं यस्यामध्यास्य पार्थिवः॥
न्यायान् पश्येत् कृतमतिः सा सभाऽध्वरसंनिभा।
शब्दाभिधानतत्त्वज्ञौ गणने कुशलौ शुची।
नानालिपिज्ञौ कर्तव्यौ राज्ञा गणकलेखकौ॥

कात्यायनः—मतिशीलवयोवृत्तावित्तवद्भिरमत्सरैः।
वणिग्भिः स्यात् कतिपयैः कुलोद्भूतैरधिष्ठितः॥

बृहस्पतिः—लोकवेदाङ्गधर्मज्ञाः सप्त पञ्च त्रयोऽपि वा।
यत्रोपविष्टा विप्राग्र्याः सा यज्ञसदृशी सभा॥

याज्ञवल्क्यः—श्रुताध्ययनसंपन्ना धर्मज्ञाः सत्यवादिनः।
राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः।

नारदः—राजा तु धार्मिकान् सभ्यान् नियुञ्ज्यात् सुपरीक्षितान्।
व्यवहारधुरं वोढुं ये शक्ताः सद्गवा इव॥

१ ख. वेदवे°

कुलानि श्रेणयश्चैव सभ्याश्चाधिकृता नृपः।
प्रतिष्ठा व्यवहाराणां गुर्वेषामुत्तरोत्तरम्।
कुलादिभिः कृतं कार्यं विचार्यं तद् यथोत्तरम्।
असंतुष्टस्य कर्तव्यं यावद् राजकृतं भवेत्।
रागाद् द्वेषाद् भयाद् वाऽपि स्मृत्यपेतादिकारिणः।
सभ्याः पृथक् पृथक् दण्ड्या विवादाद् द्विगुणं दमम्॥

सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम्।
अब्रुवन् विब्रुवन् वाऽपि नरो भवति किल्बिषी॥

पादोऽधर्मस्य कर्तारं पादो गच्छति साक्षिणः।
पादः सभासदः सर्वान् पादो राजानमृच्छति।
न्यायशास्त्रमतिक्रम्य सभ्यैर्यत्र विनिश्चितम्।
तत्र धर्मो ह्यधर्मेण हतो हन्ति नराधिपम्॥
राजा भवत्यनेनास्तु मुच्यन्ते च सभासदः।
एनो गच्छति कर्तारं निन्दार्हो यत्र निन्द्यते॥

नारदः—यत्र सभ्याः सभां प्राप्य तूष्णीं ध्यायन्त आसते।
यथाप्राप्तं च न ब्रूयुः सर्वे तेऽनृतवादिनः।
नानियुक्तेन वक्तव्यं व्यवहारेषु किंचन।
नियुक्तेन तु वक्तव्यमपक्षपतितं वचः॥

नियुक्तो वाऽनियुक्तो वा शास्त्रज्ञो वक्तुमर्हति।
दैवीं वाचं स वदति यः शास्त्रमुपजीवति॥

नारदः—न सा सभा यत्र न सन्ति वृद्धा।
न ते वृद्धा ये न वदन्ति धर्मम्।

नासौ धर्मो यत्र न सत्यमस्ति।
न तत् सत्यं यच्छलेनानुविद्धम्॥

बृहस्पतिः—अन्यायवादिनः सभ्यास्तथैवोत्कोचजीविनः।
विश्वस्तवञ्चकाश्चैव निवार्याः सर्व एव ते॥

कात्यायनः—अनिर्णीतेऽत्र यद्येष संभाषेत रहोऽर्थिना।
प्राड्विवाकोऽपि दण्ड्यः स्यात् सभ्याश्चैव न संशयः॥

देशाचारानभिज्ञा ये नास्तिकाः शास्त्रवर्जिताः।
उन्मत्तक्रुद्धलुब्धार्ता न प्रष्टव्या विनिर्णये॥
न्यायमार्गादपेतं तु ज्ञात्वा चित्तं महीपतेः।
वक्तव्यं तत्प्रियं तत्र न सभ्यः किल्बिषी भवेत्॥
लिङ्गिनः श्रेणिपूगाश्च वणिग्व्रातास्तथाऽपरे।
स्वधर्मेणैव कार्याणि कुर्युस्ते निर्णयं सदा॥
वणिक्शिल्पप्रयोगेषु कृषिरङ्गोपजीविषु।
रागद्वेषादिकं त्यक्त्वा यः कुर्यात् कार्यनिर्णयम्।
शास्त्रोदितेन विधिना तस्य यज्ञफलं भवेत्।
सत्यं देवा समासेन मनुष्यास्त्वनृतं विदुः॥
इहैव तस्य देवत्वं यस्य सत्ये स्थिता मतिः।
अधर्मे तु यदा राजा नियुञ्जीत विवादिनाम्।
विज्ञाप्य नृपतिं सभ्यस्तदा सम्यङ्निवर्तयेत्॥

इति सभ्यासभ्योपदेशः।

---

अथ व्यवहारलक्षणम्।

प्रयत्नसाध्ये विच्छिन्ने धर्माख्ये न्यायविस्तरे।
साध्यमूलस्तु यो वादो व्यवहारः स उच्यते॥
वि नानार्थेऽव संदेहे हरणं हार इष्यते।
नानासंदेहरणाद् व्यवहार[1]स्ततः स्मृतः॥

नारदः—चतुष्पाच्च चतुःस्थानश्चतुःसाधन एव च।
चतुर्हितश्चतुर्व्यापी चतुष्कारी प्रकीर्तितः।
त्रियोनिर्द्व्यभियोगश्च द्विद्वारो द्विगतिस्तथा।
अष्टाङ्गोऽष्टादशपदः शतशाखस्तथैव च॥
धर्मश्च व्यवहारश्च चरित्रं राजशासनम्।
चतुष्पाद् व्यवहारोऽयमुत्तरः पूर्वबाधकः।
तत्र सत्ये स्थिते धर्मो व्यवहारश्च साक्षिषु॥
चरित्रं पुस्तककृतं राजाज्ञायां तु शासनम्।

---

१ ख. °र इति स्मृ°। ग. °रस्तथा स्मृ°।

सामाद्युपायसाध्यत्वाच्चतुःशासन उच्यते ।
चतुर्णामपि वर्णानां रक्षणाच्च चतुर्हितः ॥
कर्तॄनथो साक्षिणश्च सभ्यान्राजानमेव च ।
व्याप्नोति पादशो यस्माच्चतुर्व्यापी ततः स्मृतः ॥
धर्मस्यार्थस्य यशसो लोकवृत्तेस्तथैव च ।
चतुर्णां कारणादेव चतुष्कार्यी प्रकीर्तितः ॥
कामात्क्रोधाच्च मोहाच्च त्रिभ्यो यस्मात्प्रवर्तते ।
त्रियोनिः कीर्त्यते तेन त्रयमेवं विवादकृत् ॥
द्व्यभियोगस्तु विज्ञेयः शङ्कातत्त्वाभियोगतः ।
शङ्का सतां तु संसर्गात्तत्त्वं होढादिदर्शनात् ॥
पक्षद्वयाभिसंबधाद्द्विद्वारः स उदाहृतः ।
भूतच्छलानुकारित्वाद्द्विगतिः स उदाहृतः ॥
भूतं तत्त्वार्थसंयुक्तं प्रमादाभिहितं छलम् ।
राजा स्वपुरुषाः सभ्याः शास्त्रं गणकलेखकौ ॥
हिरण्यमग्निरुदकमष्टाङ्गः स उदाहृतः ।
ऋणादानं ह्युपनिधिः संभूयस्थानमेव च ॥
दत्तस्य पुनरादानमशुश्रूषाऽभ्युपेत्य च ।
वेतनस्यानपाकर्म तथैवास्वामिविक्रयः ॥
विक्रीयासंप्रदानं च क्रीत्वाऽनुशय एव च ।
समयस्यानपाकर्म विवादः क्षेत्रजस्तथा ॥
स्त्रीपुंसयोश्च संबन्धो दायभागोऽथ साहसम् ।
वाक्पारुष्यं तथैवोक्तं दण्डपारुष्यमेव च ॥
द्यूतं प्रकीर्णकं चैवमष्टादशपदः स्मृतः ।

बृहस्पतिः—द्विसप्तकोऽर्थमूलस्तु हिंसामूलश्चतुर्विधः ।
पारुष्ये द्वे वधश्चैव परस्त्रीसंग्रहस्तथा ॥
हिंसोद्भवानि चत्वारि पदान्याह बृहस्पतिः ।
एषामेव प्रभेदोऽन्यः शतमष्टोत्तरः स्मृतः ॥
क्रियाभेदो मनुष्याणां शतशाखो निगद्यते ।
पश्वाज्यक्रात्विगादीनां संयोगाज्जायतेऽध्वरः ॥

यथा संबध्यते तेन व्यवहारस्तथोच्यते।
यज्ञेऽनुपूज्यते विष्णुर्व्यवहारे महीपतिः॥
यजमानो जयी तत्र जितः पशुरुदाहृतः।
पूर्वपक्षोत्तरावाज्यं प्रतिज्ञा च हविः स्मृतः( ता )॥
त्रयी शास्त्राणि सभ्याश्च ऋत्विजां दक्षिणा दमः।
तथा चैवोपद्रष्टारौ ज्ञेयौ गणकलेखकौ।
एषोऽध्वरसमः प्रोक्तो व्यवहारः समाहृतः॥
स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः।
आवेदयति चेद्राज्ञे व्यवहारपदं हि तत्।
मनुः—नोत्पादयेत् स्वयं कार्यं राजा नाप्यस्य पूरुषः।
न च प्रापितमन्येन ग्रसेत् कार्यं कथंचन॥
रागादिना यदेकेन कोपितः कारणं वदेत्।
तदोमिति लिखेत् सर्वं वादिने फलकादिषु॥
बृहस्पतिः—पूर्वपक्षं स्वभावोक्तं प्राड्विवाकोऽथ लेखयेत्।
पाण्डुलेख्येन फलके ततः पत्रे विशोधितम्॥
अधिकान् छादयेदर्थान् न्यूनांश्च परिपूरयेत्।
भूमौ निवेशयेत्तावद् यावत् सोऽर्थो न निश्चितः॥
निरवद्यां सप्रतिज्ञां प्रमाणागमसंयुताम्।
अल्पाक्षरां प्रभूतार्थां निःसंदिग्धां निराकुलाम्।
आवेदयेद् विवादार्थी परेणान्यायपीडितः।
आवेद्य तु गृहीतेऽर्थे प्रशमं यान्ति ये मिथः।
अभियोगानुरूपेण तेषां दण्डं प्रकल्पयेत्॥
पूर्वोत्तरे संप्रविष्टे विचारे च प्रवर्तिते।
प्रशमं ये मिथो यान्ति दाप्यास्ते द्विगुणं दमम्॥
आवेद्य तु गृहीतेऽर्थे प्रशमं यान्ति ये मिथः।
सर्वे द्विगुणदण्डास्तु विप्रलम्भान्नृपस्य तु॥
काले कार्यार्थिनं पृच्छेत् प्रणतं पुरतः स्थितम्।
किं कार्यं का च ते पीडा मा भैषीर्ब्रूहि मानव॥

---

१ क. ख. °सेदर्थं क°। २ ख. °ण. तस्य द°।

एवं पृष्टः स यद्ब्रूयात्तत् सभ्यैर्ब्राह्मणैः सह ।
विमृश्य कार्यं न्यायं चेदाह्वानार्थमतः परम् ॥
मुद्रां दद्यात्तथा पत्रं पुरुषं वा समादिशेत् ।
आहूतस्त्ववमन्येत यः शक्तो राजशासनम् ॥
अभियोगानुरूपेण तस्य दण्डं प्रकल्पयेत् ।
हीने कर्मणि पञ्चाशन्मध्यमे द्विशतावरः ॥
गुरुकार्ये च दण्डः स्यान्नित्यं पञ्चशतावरः ।

इति व्यवहारलक्षणम् ।

---

अथ पक्षाभासलक्षणम् ।

बृहस्पतिः—पतिदादिकृतश्चैव यश्च न प्रकृतं गतः ।
अस्वतन्त्रकृतश्चैव पूर्वपक्षो न सिध्यति ॥
मत्तोन्मत्तार्तव्यसनिबालवृद्धप्रयोजितः ।
असंबन्धकृतश्चैव व्यवहारो न सिध्यति ॥
गुरुशिष्यौ पितापुत्रौ दम्पती स्वामिभृत्यकौ ।
एतेषां समवेतानां व्यवहारो न सिध्यति ॥
एकस्य बहुभिः सार्धं स्त्रीणां प्रेष्यजनस्य च ।
अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः ॥
अप्रसिद्धं निराबाधं निरर्थं निष्प्रयोजनम् ।
असाध्यं वा विरुद्धं वा पक्षाभासं विवर्जयेत् ॥

इति पक्षाभासलक्षणम् ।

---

अथाऽऽसेधप्रकरणम् ।

वक्तव्येऽर्थे न तिष्ठन्तमुत्क्रामन्तं च तद्वचः ।
आसेधयेद्विवादार्थी यावदाह्वानदर्शनम् ॥
स्थानासेधः कालकृतः प्रवासात्कर्मणस्तथा ।
चतुर्विधः स्यादासेध आसिद्धस्तं न लङ्घयेत् ॥
क्षेत्रारामगृहादीनि धनधान्यादिकं तथा ।
अन्यायवादिनां त्वेतान्यासेधव्यानि वादिना ॥

---

१ ख. ${}^{१}$धाद्यथा ।

आसेद्धा तु स्वमासेधं स्वयमेवोत्सृजेद्यदि ।
न तस्यातिक्रमाद्दोषो न च दण्डं प्रकल्पयेत् ॥
राज्ञे निवेदनादूर्ध्वमासेद्धा नोत्सृजेत्स्वयम् ।
उत्सृजेच्चेद्दमो दाप्य आसिद्धश्च न लङ्घयेत् ॥
नदीसंतारकान्तारदुर्देशोपप्लवादिषु ।
आसिद्धस्तु परासेधमुत्क्रामन्नापराध्नुयात् ॥
निवेष्टुकामो रोगार्तो यियक्षुर्व्यसने स्थितः ।
अभियुक्तस्तथाऽन्येन राजकार्योद्यतस्तथा ॥
गवां प्रचारे गोपालाः सस्यारम्भे कृषीवलाः ।
शिल्पिनश्चापि तत्काल आयुधीयाश्च विग्रहे ॥
अप्राप्तव्यवहारश्च दूतो दानोन्मुखो व्रती ।
विषमस्थश्च नाऽऽसेध्यो न चैतानाह्वयेन्नृपः ॥
वृक्षं पर्वतमारूढा हस्त्यश्वरथनौस्थिताः ।
विषमस्थाश्च ते सर्वे नाऽऽसेध्याः कार्यसाधकैः ॥
यस्त्विन्द्रियनिरोधेनाप्याहारोच्छ्वसनादिभिः ।
आसेधयेदनासेध्यैः स दण्ड्यो नत्वतिक्रमी ॥
न हीनपक्षां युवतिं कुले जातां प्रसूतिकाम् ।
सर्ववर्णोत्तमां कन्यां यां जातिप्रभुकां स्मृताम् ॥
तदधीनकुटुम्बिन्यः स्वैरिण्यो गणिकाश्च याः ।
निष्कुला याश्च पतितास्तासामाह्वानमिष्यते ।

इत्यासेधप्रकरणम् ।

---

अथ पुरुषान्तरनियोगविधिः ।

हारीतः—यो न भ्राता न च पिता न पुत्रो न नियोगकृत् ।
परार्थवादी दण्ड्यः स्याद्व्यवहारेषु विब्रुवन् ॥

नारदः—अर्थिना संनियुक्तो वा प्रत्यर्थिप्रहितोऽपि वा ।
यो यस्यार्थे विवदते तयोर्जयपराजयौ ॥

बृहस्पतिः—यस्याभियोगं कुरुते सत्येनाऽऽशङ्कयाऽपि वा ।
तमेवाऽऽनयेद्राजा मुद्रया पुरुषेण वा ।

देशं कालं च विज्ञाय कार्याणां च बलाबलम् ।
अकल्यादीनपि शनैर्यानैरेवाऽऽह्वयेन्नृपः ॥
उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये ।

कात्यायनः—अथ चेत्प्रतिभूर्नास्ति वादयोग्यस्य वादिनः ।
स रक्षितो दिनस्यान्ते दद्याद्दूताय वेतनम् ॥
द्विजातिः प्रतिभूहीनो रक्ष्यः स्याद्बाह्यचारिभिः ।
शूद्रादीन्प्रतिभूहीनान्बन्धयेन्निगलेन तु ॥
अतिक्रमेऽपयाने च दण्डयेत्तं पणाष्टकम् ।
नित्यकर्मोपरोधस्तु न कार्यः सर्ववर्णिनाम् ॥

इति पुरुषान्तरनियोगविधिः ।

---

अथ भाषोत्तरपादनिरूपणम् ।

अर्थानर्थावुभौ बुद्ध्वा धर्माधर्मौ च केवलौ ।
वर्णक्रमेण सर्वाणि पश्येत्कार्याणि कार्यिणाम् ॥
यस्य वाऽप्यधिका पीडा कार्यं वाऽभ्यधिकं भवेत् ।
तस्यार्थवादो दातव्यो न यः पूर्वं निवेदयेत् ॥

याज्ञवल्क्यः—प्रत्यार्थिनोऽग्रतो लेख्यं यथावेदितमार्थिना ।
समामासतदर्धाहर्नामजात्यादिचिह्नितम् ॥

बृहस्पतिः—निरवद्यं सप्रतिज्ञं प्रमाणागमसंयुतम् ।
द्रव्यसंख्योदयं पीडां क्षमालिङ्गं च लेखयेत् ॥
देशः कालस्तथा स्थानं संनिवेशस्तथैव च ।
ज्ञातृसंज्ञा निवासश्च प्रमाणं क्षेत्रनाम च ॥
पितृपैतामहं चैव पूर्वराजानुकीर्तनम् ।
स्थावरेषु विवादेषु दशैतानि निवेशयेत् ॥
शङ्काभियोगस्तथ्यं च लब्धेऽर्थेऽभ्यर्थनं तथा ।
वृत्ते वादे पुनर्वादः पक्षो ज्ञेयश्चतुर्विधः ॥
भ्रान्तिः शङ्का समुद्दिष्टा तथ्यं नष्टार्थदर्शनम् ।
लब्धेऽर्थेऽभ्यर्थनं मोहाद्वृत्ते वादे पुनः क्रिया ॥

देशकालविहीनश्च द्रव्यसंख्याविवर्जितः ।
साध्यप्रमाणहीनश्च पक्षो नादेय इष्यते ॥
अभियोक्ताऽप्रगल्भत्वाद्वक्तुं नोत्सहते यदि ।
तस्य कालः प्रदातव्यः कार्यशक्त्यनुरोधतः ॥
श्वो लेखनं वा लभते त्र्यहं सप्ताहमेव वा ।
मतिरुत्पद्यते यावद्विवादे वक्तुमिच्छतः ॥

बृहस्पतिः—पाण्डुलेख्येन फलके भूमौ वा प्रथमं लिखेत् ।
ऊनाधिकं तु संशोध्य ततः पत्रे निवेशयेत् ॥
बहुप्रतिज्ञं यत्कार्यं व्यवहारेषु निश्चितम् ।
कामं तदपि गृह्णीयाद्राजा तत्त्वबुभुत्सया ॥

नारदः—न्यायं वा नेच्छते कर्तुमन्यायं वा करोत्ययम् ।
न लेखयति यस्त्वेवं तस्य पक्षो न सिध्यति ॥
शोधयेत्पूर्ववादं तु यावन्नोत्तरदर्शनम् ।
अवष्टब्धस्योत्तरेण निवृत्तं शोधनं भवेत् ॥
विनिश्चिते पूर्वपक्षे ग्राह्याग्राह्ये विशेषिते ।
प्रतिज्ञार्थे स्थिरीभूते लेखयेदुत्तरं ततः ॥
शालीनत्वाद् भयाद्वाऽपि प्रत्यर्थी स्थितिविभ्रमात् ॥
कालं प्रार्थयते यत्र तत्रैवं लब्धुमर्हति ॥
एकाहं द्वित्र्यहं चैव पञ्चसप्ताहमेव वा ।
मासं मासत्रयं वर्षं लभते साक्ष्यपेक्षया ॥
कालं शक्तिं विदित्वा तु कार्याणां च बलाबलम् ।
अल्पं वा बहु वा कालं दद्यात्प्रत्यर्थिने प्रभुः ।
गोभूहिरण्यस्तेयेषु पारुष्यात्ययिकेषु च ॥
साहसेष्वपवादे च सद्य एव विवादयेत् ।

कात्यायनः—सद्यः कृतेषु कार्येषु सद्य एव विवादयेत् ।
कालातीतेषु वा कालं दद्यात्प्रत्यर्थिने प्रभुः ॥
यदा त्वेकविधः पक्षः कल्पितः पूर्ववादिना ।
दद्यात्तत्पक्षसंबन्धं प्रतिवादी तथोत्तरम् ॥

नारदः—पक्षस्य व्यापकं सारमसंदिग्धं निराकुलम् ।
अव्याख्यागम्यमित्येवमुत्तरं तद्विदो विदुः ॥

मिथ्यासंप्रतिपत्त्या वा प्रत्यवस्कन्दनेन वा ।
प्राङ् न्यायविधिसिद्ध्या वाऽप्युत्तरं स्याच्चतुर्विधम् ॥
मिथ्यैतन्नाभिजानामि, तदा तत्र न संनिधिः ।
अजातश्चास्मि तत्काल इति मिथ्या चतुर्विधा ॥
श्रुत्वा भाषार्थमन्यस्तु यदा तं प्रतिषेधति ।
अर्थतः शब्दतो वाऽपि मिथ्या तज्ज्ञेयमुत्तरम् ॥
मिथ्योक्तेषु चतुष्पात्स्यात्प्रत्यवस्कन्दने तथा ।
प्राङ्न्याये तु त्रिपाज्ज्ञेयो द्विपात्संप्रतिपत्तिषु ॥
पूर्वपक्षश्चोत्तरश्च प्रत्याकलित एव च ।
क्रियापादश्च विज्ञेयश्चतुष्पात्स उदाहृतः ॥
तथ्ये तथ्यं प्रयुञ्जीत मिथ्या मिथ्ये च लेखयेत् ।
कारणं कारणोपेते प्राङ्न्याये तु जयं तथा ॥
मिथ्योत्तरं कारणं च स्यातामेकत्र चेदुभे ।
सत्यं वाऽपि तथाऽन्येन तत्र ग्राह्यं किमुत्तरम् ॥
मिथ्याकारणयोर्वाऽपि ग्राह्यं कारणमुत्तरम् ।
यत्प्रभूतार्थविषयं यत्र वा स्यात्क्रियाफलम् ॥
उत्तरं तत्र तज्ज्ञेयमसंकीर्णमतोऽन्यथा ।

व्यासः—प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत् क्रियाम् ।
मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न संभवेत् ॥
कारणात् पूर्वपक्षोऽपि ह्युत्तरत्वं प्रपद्यते ।
अतः क्रिया सदा प्रोक्ता पूर्वपक्षप्रसाधिनी ॥

याज्ञवल्क्यः—साक्षिषूभयतः सत्सु साक्षिणः पूर्ववादिनः ।
पूर्वपक्षेऽधरीभूते भवन्त्युत्तरवादिनः ।

कात्यायनः—संदिग्धमन्यत्प्रकृतमत्यल्पमतिभूरि च ।
पक्षैकदेशव्या(पि) तु तच्च नैवोत्तरं भवेत् ।
व्यत्यस्तपदमव्यापि निगूढार्थं तथाऽऽकुलम् ॥
व्याख्यागम्यमसारं च नोत्तरं शंसते बुधः ।
पक्षैकदेशे यत्सत्यमेकदेशे च कारणम् ॥

---

१ ख. शस्यते बुधैः ।

मिथ्या चैवैकदेशे च संकरात्तदनुत्तरम्।
न चैकस्मिन् विवादे तु क्रिया स्याद्वादिनोर्द्वयोः ॥
न चार्थसिद्धिरुभयोर्न चैकत्र क्रियाद्वयम्।
अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत्।
अभियुक्तं न चान्येन नोक्तं विप्रकृतिं नयेत्।
कुर्यात् प्रत्यभियोगं तु कलहे साहसेषु च ॥

बृहस्पतिः—पूर्वपक्षे यथार्थं तु न दद्यादुत्तरं हि यः।
प्रत्यर्थी दापनीयः स्यात् सामादिभिरुपक्रमैः।
प्रियपूर्वं वचः सामं भेदस्तु भयदर्शनम्।
अर्थापकर्षणं दण्डो बन्धनं ताडनं तथा ॥
उपायैश्चोद्यमानोऽपि न दद्यादुत्तरं तु यः।
अतिक्रान्ते सप्तरात्रे जितोऽसौ दण्डमर्हति ॥

कात्यायनः—उभयोर्लिखिते वाक्ये प्रारब्धे कार्यनिर्णये।
अनुक्तं तत्र यो ब्रूयात् तदर्थात् स तु हीयते ॥
मोहाद्वा यदि वा शाठ्याद्यन्नोक्तं पूर्ववादिना।
उत्तरान्तर्गतं वाऽपि तद्ग्राह्यमुभयोरपि ॥

कात्यायनः—उन्मत्तमत्तानिर्धूतमहापातकदूषिताः।
जडान्धवृद्धस्त्रीबाला विज्ञेयास्तु निरुत्तराः॥

मनुः—आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च।
नेत्रवक्त्रविकारैश्चैर्गृह्यतेऽन्तर्गतं मनः ॥

याज्ञवल्कः—देशाद्देशान्तरं याति सृक्किणी परिलेढि च।
ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च ॥
परिशुष्यत् स्खलद्वाक्यो विरुद्धं बहु भाषते।
वाक्चक्षुः पूजयति नो तथोष्ठौ निर्भुजत्यपि ॥
स्वभावाद्विकृतिं गच्छेन्मनोवाक्कायकर्मभिः।
अभियोगेऽथ साक्ष्ये वा दुष्टः स परिकीर्तितः ॥
सापदेशं हरेत्कालमब्रुवन्नपि संसदि।
उक्त्वा वचो विब्रुवंश्च हीयमानस्तु लक्ष्यते ॥

---

१ ख भाषणेन। २ ख. °कारैश्च ग°।

अन्यवादी क्रियाद्वेषी नोपस्थायी निरुत्तरः ।
आहूतप्रपलायी च हीनः पञ्चविधो जनः ॥
पूर्ववादं परित्यज्य योऽन्यमालम्बते पुनः ।
वादसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः ।

इति भाषोत्तरपादानिरूपणम् ।

---

अथ संधिप्रकरणम् ।

बृहस्पतिः—पूर्वोत्तरे तु लिखिते प्रक्रान्ते कार्यनिर्णये ।
द्वयोः संततयोः संधिः स्यादयःखण्डयोरिव ॥
प्रमाणसमता यत्र भेदः शास्त्रचरित्रयोः ।
तत्र राजाज्ञया संधिरुभयोरपि शस्यते ।
तस्मात्कुलगणाध्यक्षा धर्मज्ञाः समदृष्टयः ।
अद्वेषलोभा ब्रूयुर्यत्कर्तव्यमभिजानता ॥

इति संधिप्रकरणम् ।

---

अथ क्रियापादः ।

श्रुत्वा पूर्वोत्तरे सभ्यैर्निर्दिष्टा यत्र भावना ।
विभावयेत्प्रतिज्ञातं सोऽखिलं लिखितादिना ॥
कात्यायनः—वादिना यदभिप्रेतं स्वकं साधयितुं स्फुटम् ।
तत्साध्यं साधनं येन साध्यं तत्सिध्यतेऽखिलम् ॥
सारभूतं पदं त्यक्त्वा ह्यसाराणि बहून्यपि ।
प्रसाधयेत्क्रिया या तु तां जह्यात्सारवर्जिताम् ॥
निर्णीते व्यवहारे तु प्रमाणमफलं भवेत् ।
लिखितं साक्षिणो वाऽपि पूर्वमावेदितं न यत् ।
यथा पक्वेषु धान्येषु निष्फलः प्रावृषो गुणः ॥
निर्णीतव्यवहाराणां प्रमाणमफलं तथा ।
याज्ञवल्क्यः—ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम् ।
तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथा ॥

---

१ ख. °युस्तत् ।

बृहस्पतिः—द्विप्रकारा क्रिया प्रोक्ता दैविकी मानुषी तथा ।
एकैकाऽनेकधा भिन्ना ऋषिभिस्तत्त्ववेदिभिः ॥
साक्षिणो लिखितं भुक्तिर्मानुषं त्रिविधं स्मृतम् ।
धटाद्या धर्मजाता तु दैवी नवविधा क्रिया ॥
साक्षी द्वादशभेदस्तु लिखितं दशधा स्मृतम् ।
भुक्तिस्तु द्विविधा ज्ञेया दैवी नवविधा क्रिया ॥
व्यासः—ऋणे लेख्यं साक्षिणो वा भुक्तिलेख्यादयोऽपि वा ।
दैविकी वा क्रिया प्रोक्ता प्रजानां हितकाम्यया ॥
याज्ञवल्क्यः—प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम् ।
एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥
नारदः—दिवाकृते कार्यविधौ ग्रामेषु नगरेषु च ।
संभवे साक्षिणां चैव न दिव्या भवति क्रिया ॥
कात्यायनः—यद्येको मानुषीं ब्रूयादन्यो ब्रूयात्तु दैविकीम् ।
मानुषीं तत्र गृह्णीयान्न तु दैवीं क्रियां नृपः ॥
यद्येकदेशव्याप्ताऽपि क्रिया विद्येत मानुषी ।
सा ग्राह्या न तु पूर्णाऽपि दैविकीं वदतां नृणाम् ॥
द्वारमार्गक्रियाभेदे जलवाहादिके तथा ।
भुक्तिरेव तु गुर्वी स्यान्न लेख्यं न च साक्षिणः ।
वाक्पारुष्ये महीवादे निषिद्धा दैविकी क्रिया ।
प्रदातव्या प्रयत्नेन साहसेषु चतुर्ष्वपि ॥
यदा साक्षी न विद्येत विवादे वदतां नृणाम् ।
तदा दिव्यैः परीक्षेत शपथैश्च पृथग्विधैः ॥
महापापाभियोगेषु निक्षेपहरणे तथा ।
दिव्यैः कार्यं परीक्षेत राजा सत्स्वपि साक्षिषु ॥
पूगश्रेणिगणादीनां या स्थितिः परिकीर्तिता ।
तस्याश्च साधनं लेख्यं न दिव्यं न च साक्षिणः ॥
व्यासः—रहःकृतं प्रकाशं च द्विविधं कार्यमुच्यते ।
प्रकाशं साक्षिभिर्ज्ञेयं दैविकेन रहःकृतम् ।
लिखिते साक्षिवादे च संदेहो जायते यदा ॥

अनुमाने च संभ्रान्ते तदा दिव्यं नियोजयेत्।
नारदः—अरण्ये निर्जने रात्रावन्तर्वेश्मनि साहसे।
न्यासापहरणे चैव दिव्या संभवति क्रिया॥
समत्वं साक्षिणां यत्र दिव्या संभवति क्रिया।
प्राणान्तिकविवादेषु विद्यमानेषु साक्षिषु।
दिव्यमालम्बते वादी न पृच्छेत्तत्र साक्षिणः॥
यन्नामगोत्रैस्तुल्यं हि लेख्यकं तु क्वचिद्भवेत्।
अगृहीते धने तत्र कार्यं दिव्येन निर्णयेत्॥
इति क्रियापादः।

---

अथ साक्षिनिरूपणम्।

संदिग्धेषु च कार्येषु द्वयोर्विवदमानयोः।
दृष्टश्रुतानुभूतत्वात् साक्षिभ्यो व्यक्तिदर्शनम्।
समक्षदर्शनात् साक्षी विज्ञेयः श्रोत्रचक्षुषोः।
साक्षी द्विभेदो विज्ञेयः कृत एकोऽकृतोऽपरः॥
लेख्यारूढः कृतो ज्ञेयो मुक्तकोऽकृत उच्यते।
बृहस्पतिः—लिखितो लेखितो गूढः स्मारितः कुल्यदूतकौ।
याद्दश्चि(च्छि)कश्चोत्तरश्च कार्यमध्यगतस्तथा॥
नृपोऽध्यक्षस्तथा ग्रामः साक्षी द्वादशधा स्मृतः।
जातिनामादि लिखितं येन स्वं पित्र्यमेव च॥
निवासं च स विज्ञेयः साक्षी लिखितसंज्ञकः।
संधिक्रियां क्रियाभेदैस्तस्य कृत्वा ऋणादिके॥
प्रत्यक्षं लिख्यते यश्च लेखितः स उदाहृतः।
कुड्यव्यवहितो यस्तु शृणोति ऋणभाषितम्॥
यथाश्रुतं यथाभूतं गूढसाक्षी स उच्यते।
आहूय यः कृतः साक्षी ऋणन्यासक्रियादिके।
स्मार्यते च मुहुः कार्यं स्मारितः सोऽभिधीयते।
विभागदाने विपणे ज्ञातिर्यत्रोपदिश्यते॥

द्वयोः समानो धर्मज्ञः कुल्यः स परिकीर्तितः ।
अर्थिप्रत्यर्थिवचनं शृणुयात् प्रेषितस्तु यः ॥
उभयोः संमतः साधुर्दूतकः स उदाहृतः ।
क्रियमाणे तु कर्तव्ये यः कश्चित् स्वयमागतः ॥
अत्र साक्षी त्वमस्माकमुक्तो यादृश्चि(च्छि)कः स्मृतः ।
यत्र साक्षी दिशो गच्छन् मुमूर्षुर्वा यथाश्रुतम् ॥
अन्यं संश्रावयेत्तं तु विद्यादुत्तरसाक्षिणम् ।
उभाभ्यां यश्च विश्वस्तः कार्यं चापि निवेदितम् ॥
गूढसाक्षी स विज्ञेयः कार्यमध्यगतस्तथा ।
अर्थिप्रत्यर्थिनोर्वाक्यं यच्छ्रुतं भूभृता स्वयम् ॥
स एव तत्र साक्षी स्याद्विसंवादे द्वयोरपि ।
निर्णीते व्यवहारे तु पुनर्न्यायो यदा भवेत् ।
अध्यक्षः सभ्यसहितः साक्षी स्यात्तत्र नान्यथा ॥
मुषितं खनितं यत्र सीमायाश्च समन्ततः ।
अकृतोऽपि भवेत्साक्षी ग्रामस्तत्र न संशयः ॥

बृहस्पतिः—नव स्युः सप्त वा पञ्च चत्वारस्त्रय एव वा ।
उभौ वा श्रोत्रियौ ग्राह्यौ नैकं पृच्छेत्कदाचन ॥

याज्ञवल्क्यः—उभयानुमतः साक्षी भवत्येकोऽपि धर्मवित् ॥

नारदः—अथवा कालनियमो न दृष्टः साक्षिणं प्रति ।
स्मृत्यपेक्षं हि साक्षित्वमाहुः शास्त्रविदो जनाः ॥
यस्य नोपहता बुद्धिर्दृष्टिश्रोत्रे च नित्यशः ।
सुदीर्घेणापि कालेन स वै साक्षित्वमर्हति ॥

याज्ञवल्क्यः—तपस्विनो दानशीलाः कुलीनाः सत्यवादिनः ।
धर्मप्रधाना ऋजवः पुत्रवन्तो धनान्विताः ॥
त्र्यवराः साक्षिणो ज्ञेयाः श्रौतस्मार्तक्रियापराः ।
यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः ॥

कात्यायनः—स्त्रीणां साक्ष्यं स्त्रियः कुर्युर्द्विजानां सदृशा द्विजाः ।
शूद्राश्च सन्तः शूद्राणामन्त्यानामन्त्ययोनयः ॥

नारदः—असाक्ष्यपि हि साक्ष्येषु दृष्टः पञ्चविधो बुधैः।
वचनाद्दोषतो भेदात्स्वयमुक्तो मृतान्तरः॥
श्रोत्रियास्तापसा वृद्धा ये च प्रव्राजिता नराः।
असाक्षिणस्ते वचनान्नात्र हेतुरदाहृतः॥
स्तेनाः साहसिकाश्चण्डाः कितवा वञ्चकास्तथा।
असाक्षिणस्ते दुष्टत्वात्तेषु सत्यं न विद्यते॥
राज्ञा परिगृहीतेषु साक्षिष्वेकार्थनिश्चये।
वचनं यत्र भिद्येत ते स्युर्भेदान्न साक्षिणः॥
स्वयमुक्तो न निर्दिष्टः स्वयमेवेत्य यो वदेत्।
सूचीत्युक्तः स शास्त्रेषु न स साक्षित्वमर्हति॥
योऽर्थः श्रावयितव्यः स्यात्तस्मिन्नसति चार्थिनि।
क्क तद्वदन्तु साक्षित्वामित्यसाक्षी मृतान्तरः॥
याज्ञवल्क्यः—स्त्रीबालवृद्धकितवमत्तोन्मत्ताभिशस्तकाः।
रङ्गावतारी पाषण्डी कूटकृद्विकलेन्द्रियः॥
पतितासार्थसंबान्धिसहायरिपुतस्कराः।
साहसी दृष्टदोषश्च निर्धूतश्चेत्यसाक्षिणः॥
नारदः—असाक्षिणो ये निर्दिष्टा दासनैकृतिकादयः।
कार्यगौरवमासाद्य भवेयुस्तेऽपि साक्षिणः॥
तेषामपि न बालः स्यान्नैको न स्त्री न कूटकृत्।
न बान्धवो न चारातिर्ब्रूयुस्ते साक्ष्यमन्यथा॥
बालोऽज्ञानादमत्या स्त्री पापाभ्यासाच्च कूटकृत्।
विब्रूयुर्बान्धवाः स्नेहाद्वैरनिर्यातनादरिः॥
एको लुब्धस्त्वसाक्षित्वाद्बहवः शुच्योऽपि न स्त्रियः।
स्त्रीबुद्धेरस्थिरत्वाच्च दोषैश्चान्येऽपि ये वृताः।
सर्वः साक्षी संग्रहणे चौर्यपारुष्यसाहसे॥
व्यासः—स्तेये च साहसे चैव संसर्गे च परस्त्रियः।
रागादीनां प्रयोगे च न दोषः साक्षिषु स्मृतः॥
मनुः—अनुभावी तु यः कश्चित् कुर्यात्साक्ष्यं विवादिनाम्।
अन्तर्वेश्मन्यरण्ये वा शरीरस्यैव चात्यये॥

याज्ञवल्क्यः—ऋणादिषु परीक्षेत साक्षिणः स्थिरकर्मसु।
साहसात्ययिके चैव परीक्षा कुत्रचित् स्मृता॥
बृहस्पतिः—साक्षिणोऽर्थी समुद्दिष्टान् सत्सु दोषेषु दूषयेत्।
अदुष्टान् दूषयन् वाऽपि तत्समं दण्डमर्हति॥
साक्ष्यदोषाश्च ये केचित् साक्षिणां चैव ये स्मृताः।
वादकाले तु वक्तव्याः पश्चादुक्तं न दूषयेत्॥
साक्ष्यदोषाः प्रयोक्तव्याः संसदि प्रतिवादिना।
पत्रे विलिख्य तान् सर्वान् वाच्यं प्रत्युत्तरं ततः॥
प्रतिपत्तौ न साक्षित्वमर्हन्ति तु कदाचन।
अतोऽन्यथा भावनीयाः क्रियायां प्रतिवादिना॥
अभावयन् दमं दाप्यः प्रत्यर्थी साक्षिणा स्फुटम्।
भाविताः साक्षिणः सर्वे साक्षिधर्मनिराकृताः॥
प्रत्यार्थिनोऽर्थिनो वाऽपि साक्षिदूषणसाधने।
प्रस्तुतार्थोपयोगेन व्यवहारान्तरं न च॥
जितः सविनयं दाप्यः शास्त्रदृष्टेन कर्मणा।
यदि वादी निराकाङ्क्षः साक्षी[1] सत्ये व्यवस्थितः॥
उक्तेऽर्थे साक्षिणो यस्तु दूषयन् प्रागदूषितान्।
न च तत्कारणं ब्रूयात् प्राप्नुयात् पूर्वसाहसम्॥
कात्यायनः—न कालहरणं कार्यं राज्ञा साक्षिप्रभाषणे।
महान् दोषो भवेत्कालाद् धर्मव्यावृत्तिलक्षणात्॥
पृच्छेन्नियम्य शपथैर्भृशमाहूय साक्षिणः।
समस्तान् विदिताचारान् विज्ञातार्थान् पृथक् पृथक्॥
मनुः—देवब्राह्मणसांनिध्ये साक्ष्यं पृच्छेदृतं द्विजान्।
उदङ्मुखान् प्राङ्मुखान् वा पूर्वाह्णे वै शुचिः शुचीन्॥
सभान्तः साक्षिणः सर्वानर्थिप्रत्यर्थिसंनिधौ।
प्राड्विवाको नियुञ्जीत विधिनाऽनेन सान्त्वयन्॥
यद्द्वयोरनयोर्वित्थ कार्येऽस्मिन् चोदितं मिथः।
तद् ब्रूत सर्वं सत्येन युष्माकं ह्यत्र साक्षिता॥

---

१ ख. साक्षिदो°।

सत्यं साक्ष्ये ब्रुवन् साक्षी लोकानाप्नोति पुष्कलान्।
इह चानुत्तमां कीर्तिं सुखी स्याल्लोकयोर्द्वयोः॥
साक्ष्येऽनृतं वदन् पाशैर्बध्यते वारुणैर्नरः।
विवशः[शतमाजाति] तस्मात् साक्षी वदेदृतम्॥
नग्नो मुण्डः कपालेन भिक्षार्थी क्षुत्पिपासितः।
दीनः शत्रुगृहं गच्छेद्यः साक्ष्यमनृतं वदेत्॥
ब्रह्मघ्नस्य तु ये लोका ये च स्त्रीबालघातिनः।
मित्रद्रुहः कृतघ्नस्य ते ते स्युर्ब्रुवतो मृषा॥
जन्मप्रभृति यत्किंचित् पुण्यं भद्र त्वया कृतम्।
तत्सर्वमाशु नो गच्छेद्यदि ब्रूयास्त्वमन्यथा॥
अवाक्शिरास्तमस्यन्धे किल्बिषी नरकं पतेत्।
यः प्रश्नं वितथं ब्रूयात्पृष्टः सन्धर्मनिश्चये।
पञ्च पश्वनृते हन्ति दश हन्ति गवानृते।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते॥
हन्ति जातानुजातांश्च हिरण्यार्थेऽनृतं वदन्।
सर्वं भूम्यनृतं हन्ति मा स्म भूम्यनृतं वदः॥
यथाश्रुतं यथादृष्टं सत्यमेवाञ्जसा वद।
बृहस्पतिः—ब्रूहीति ब्राह्मणं ब्रूयात्सत्यं ब्रूहीति पार्थिवम्।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैश्च पातकैः॥
सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः।
गोरक्षकान् वाणिजकांस्तथा कारुकुशीलवान्॥
प्रेष्यान्वार्धुषिकांश्चैव विप्राञ्शूद्रवदाचरेत्॥
ये व्यपेताः स्वधर्मेभ्यः परपिण्डोपजीविनः।
द्विजत्वमभिकाङ्क्षन्ते तांश्च शूद्रवदाचरेत्॥
वर्णानुरूपैः शपथैः शपनीयं पृथक्पृथक्।
कामिनीषु विवाहेषु गवां भुक्ते तथेन्धने॥
ब्राह्मणाभ्यवपत्तौ च शपथे नास्ति पातकः (कम्)।
सभान्तरस्थैर्वक्तव्यं साक्ष्यं नान्यत्र साक्षिभिः॥

सर्वसाक्ष्येष्वयं धर्मो ह्यन्यत्र स्थावरेषु च ।
वधे चेत्प्राणिनां साक्ष्यं वादयेच्छवसंनिधौ ।
तदभावे तु चिह्नस्य नान्यथैव विवादयेत् ॥
विवाहोपानदुष्णीषं दक्षिणं पाणिमुद्धरन् ।
हिरण्यगोशकृद्दर्भान्समादाय ऋतं वदेत् ॥
नापृष्टैरनियुक्तैर्वा समं सत्यं प्रयत्नतः ।
वक्तव्यं साक्षिभिः साक्ष्यं विवादस्थानमागतैः ।
स्वभावोक्तं वचस्तेषां ग्राह्यं यद्दोषवर्जितम् ॥
उक्ते तु साक्षिणो राज्ञा न प्रष्टव्याः पुनः पुनः ।
साक्षिसभ्यावसन्नानां नैव पौनर्भवो विधिः ॥
उपस्थितान् परीक्षेत साक्षिणो नृपतिः स्वयम् ।
साक्षिभिर्भाषितं वाक्यं सह सभ्यैः परीक्षयेत् ॥
उपस्थिताः परीक्ष्याः स्युः स्वरवर्णेङ्गितादिभिः ।
पृथक् पृथग्दण्डनीयाः कूटकृत्साक्षिणो नराः ॥
विवादाद्द्विगुणं दण्डं विवास्यो ब्राह्मणः स्मृतः ।
लोभान्मोहाद्भयान्मैत्रात्कामात्क्रोधात्तथैव च ॥
अज्ञानाद्बालभावाच्च साक्ष्यं वितथमुच्यते ।
लोभात्सहस्रं दण्डः स्यान्मोहात्पूर्वं तु साहसम् ॥
भयाद्वै मध्यमो दण्डो मैत्रात्पूर्वं तु साहसम् ।
कामाद्दशगुणं पूर्वं क्रोधात्तु द्विगुणं परम् ॥
अज्ञानाद् द्वे शते पूर्णे बालिश्याच्छतमेव तु ।
कौटसाक्ष्यं तु कुर्वाणांस्त्रीन्वर्णान्धार्मिको नृपः ॥
प्रवासयेद्दण्डयित्वा ब्राह्मणं तु विवासयेत् ।
यस्य दृश्येत सप्ताहादुक्तवाक्यस्य साक्षिणः ।
रोगोऽग्निर्ज्ञातिमरणं दाप्यो दण्डश्च तत्समम् ॥
न ददाति हि यः साक्ष्यं जानन्नपि नराधमः ।
स कूटसाक्षिणां पापैस्तुल्यो दण्डेन चैव हि ॥
सम्यक्क्रियापरिज्ञाने देयः कालस्तु साक्षिणाम् ।
संदिग्धं तत्र साक्ष्यं तु सद्यः स्पष्टं विवादयेत् ॥

त्रिपक्षादब्रुवन् साक्ष्यमृणादिषु नरोऽगदः ।
प्राप्नुयात्तदृणं सर्वं दशबन्धं च सर्वतः ॥
वर्णिनां तु वधो यत्र तत्र साक्ष्यनृतं वदेत् ।
तत्पावनाय निर्वाप्यश्चरुः सारस्वतै(तो)र्द्विजैः ॥
उदित्यृचा च वारुण्या त्वृचेनाब्दैवतेन च ।
कूश्माण्डैर्वाऽपि जुहुयाद् घृतमग्नौ यथाविधि ॥
बहुत्वं परिगृह्णीयात् साक्षिद्वैधे नराधिपः ।
समेषु तु गुणोत्कृष्टान् गुणिद्वैधे द्विजोत्तमान् ॥
कालाकृतिवयोद्रव्यदेशजातिप्रमाणतः ।
अन्यूनं चेन्निगदितं सिद्धं साध्यं विनिर्दिशेत् ॥
साध्यार्थांशे निगदिते साक्षिभिः सकलं भवेत् ।
स्त्रीसङ्गे साहसे चौर्ये यत्साध्यं परिकल्प्यते ॥
यस्याऽऽहुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत् ।
अन्यथावादिनो यस्य ध्रुवस्तस्य पराजयः ॥
न्यूनमप्यधिकं वाऽर्थं प्रब्रूयुर्यत्र साक्षिणः ।
तदाऽप्यनुक्तं विज्ञेयमेष साक्ष्यविधिः स्मृतः ॥

इति साक्षिनिरूपणम् ।

---

अथ लेख्यनिरूपणम् ।

राजलेख्यं स्थानलेख्यं स्वहस्तलिखितं तथा ।
लेख्यं तु त्रिविधं प्रोक्तं भिन्नं तद्दशधा पुनः ॥
दानलेख्यं भागलेख्यं सीमालेख्यं तथैव च ।
क्रयलेख्यं दासलेख्यमाधिलेख्यं ततः परम् ॥
संविदुद्धामलेख्यं च जयपत्रकमेव च ।
संधिपत्रं तथैवैतत् क्रियाभेदादनेकधा ॥
भूमिं दत्त्वा तु यत् कुर्याल्लेख्यं चन्द्रार्ककालकम् ।
अनाच्छेद्यमनाहार्यं दानलेख्यं तु तत् स्मृतम् ॥
विभागपत्रमित्येतद् भागिनां निर्णये कृते ।
सीमाविवादे निर्णीते सीमापत्रमिति स्मृतम् ॥

गृहक्षेत्रादिकं क्रीत्वा तुल्यमूल्यक्रयान्वितम् ।
पत्रं कारयते यत्तु लेख्यं तत् क्रयमुच्यते ॥
आध्यर्थमाधिलेख्यं स्याद्दासार्थं दासपत्रकम् ।
समीहितार्थसिद्ध्यर्थं ग्रामे श्रेणिगणादिभिः ॥
शास्त्राविरोधधर्मार्थे कृतं संवित्तिपत्रकम् ।
धनं गृहीत्वा वृद्ध्यर्थं स्वयं कुर्याच्च कारयेत् ॥
उद्धामपत्रं तत् प्रोक्तमृणलेख्यं मनीर्षिभिः ।
यः कश्चिदर्थो निष्णातः स्वरुच्या तु परस्परम् ॥
लेख्यं तु साक्षिमत् कुर्यात् तस्मिन् धनिकपूर्वकम् ।
समामासतदर्धाहर्नामजातिस्वगोत्रकम् ॥
सब्रह्मचारिकात्मीयपितृनामादिचिह्नितम् ।
समातेऽर्थे ऋणीनाम स्वहस्तेन निवेशयेत् ॥
मतं मेऽमुकपुत्रस्य यदत्रोपरि लेखितम् ।
उभयाभ्यर्थितेनेदं मया ह्यमुकसूनुना ॥
लिखितं ह्यमुकेनेति लेखकस्त्वन्ततो लिखेत् ।
साक्षिणश्च स्वहस्तेन पितृनामाङ्कपूर्वकम् ॥
अत्राहममुकः साक्षी लिखेयुरिति ते समाः ।
विनाऽपि साक्षिभिर्लेख्यं स्वहस्तलिखितं तु यत् ॥
तत्प्रमाणं स्मृतं लेख्यं बलोपधिकृताद्दते ।
अलिपिज्ञो ऋणी यः स्यात् स्वमतं लेखयेत्तु सः ॥
साक्षी वा साक्षिणाऽन्येन सर्वसाक्षिसमीपतः ।
यथोपन्यस्त [सा]ध्यर्थसंयुक्तं सोत्तरक्रियम् ॥
सावधारणकं चैव मुद्रितं राजमुद्रया ।
राज्ञः स्वहस्तचिह्नं च वादिप्रत्यर्थिसंयुतम् ॥
प्राड्विवाकादिहस्ताङ्कं जयपत्रकमिष्यते ।
संधौ कृते तु यल्लेख्यं संधिलेख्यमिति स्मृतम् ॥
देशाचारास्थितियुतं करलेख्यमिति स्मृतम् ।
समामासादिहीनं तु प्रमाणं तद्भवेत्पुनः ॥

राजा स्वहस्तचिह्नेन संधिविग्रहलेखकैः।
लिखितं राजनामाङ्कं मुद्रितं राजमुद्रया॥
समामासतदर्धाहर्नामजात्यादिचिह्नितम्।
स्पष्टवर्णक्रमोपेतमविलुप्तक्रमाक्षरम्॥
राजशासनमेतत्स्यादुत्तमं सर्वलेख्यतः।
देशाचाराविरुद्धं यद्व्यक्ताद्विविधिलक्षणम्॥
तत्प्रमाणं स्मृतं लेख्यमविलुप्तक्रमाक्षरम्।
देशान्तरस्थे दुर्लेख्ये नष्टे दुष्टे हृतेऽपि वा॥
भिन्ने दग्धेऽथवा छिन्ने लेख्यमन्यत्तु कारयेत्।

कात्यायनः—साक्षिदोषाद्भवेद्दुष्टं पत्रं वै लेखकस्य वा।
धनिकस्योपधादोषात्तथा धारणकस्य च॥

बृहस्पतिः—मुमूर्षुशिशुभीतार्तस्त्रीमत्तव्यसनातुरैः।
निशोपधिबलात्कारकृतलेख्यं न सिध्यति॥
दूषितो गर्हितः साक्षी यत्रैकोऽपि निवेशितः।
कूटलेख्यं तु तत् प्रोक्तं लेखको वाऽपि तद्विधः॥
यदुज्ज्वलं चिरकृतं मलिनं स्वल्पकालिकम्।
भग्नोन्मृष्टाक्षरयुतं लेख्यं कूटत्वमाप्नुयात्॥
दर्पणस्थं यथा बिम्बमसत् सदिव दृश्यते।
तथा लेख्यस्य बिम्बानि कुर्वन्ति कुशला जनाः॥
लेख्यमालेख्यवत् केचिल्लिखन्ति कुशला जनाः।
तस्मान्न लेख्यसामर्थ्यात्सिद्धिरैकान्तिकी मता॥
स्त्रीबालार्तान् लिप्यविज्ञान् वञ्चयन्ति स्वबान्धवाः।
लेख्यं कृत्वा स्वनामाङ्कं ज्ञेयं युक्त्यागमैस्तु तत्॥
परीक्ष्यमेतदुभयं स्वयं राज्ञा विशेषतः।
लेख्याचारेण लिखितं साक्ष्याचारेण साक्षिणः॥

कात्यायनः—लेख्ये संशयमापन्ने साक्षिलेखककर्तृषु।
नष्टेषु तेषु तल्लेख्यं कृतपूर्वाक्षरादिभिः॥
यथा लाभोपपन्नैस्तैर्निर्णयं कारयेन्नृपः।
दुष्टे पत्रे स्फुटं दोषं नोक्तवानृणिको यदि॥

ततो विंशतिवर्षाणि क्रान्तं पत्रं स्थिरं भवेत् ।
याज्ञवल्क्यः—संदिग्धे लेख्यसिद्धिः स्यात् स्वहस्तलिखितादिभिः ॥
युक्तिप्राप्तिक्रियाचिह्नसंबन्धागमहेतुभिः ।
ऋणिस्वहस्तसंदेहे जीवतो वा मृतस्य वा ॥
तत्स्वहस्तकृतैरन्यैः पत्रैस्तल्लेख्यनिर्णयः ।
मया नैतत्कृतं पत्रं कूटमन्येन कारितम् ।
अधरीकृत्य तत्पत्रमर्थे दिव्येन निर्णयः ॥
बृहस्पतिः—कुलश्रेणिगणादीनां यथाकालं प्रदर्शितम् ।
श्रावयेत्स्मारयेच्चैव तथा स्याद्बलवत्तरम् ॥
यदि लब्धं भवेत्किंचित्प्रज्ञप्तिर्वा तथा भवेत् ।
प्रमाणमेव लिखितं मृता यद्यपि साक्षिणः ॥
नारदः—दर्शितं प्रतिकालं यच्छ्रावितं स्मारितं च यत् ।
लेख्यं सिध्यति सर्वत्र मृतेष्वपि च साक्षिषु ॥
शक्तस्य संनिधावर्थो यस्य लेख्येन भुज्यते ।
वर्षाणि विंशतिं यावत्तत्पत्रं दोषवर्जितम् ॥
वाचकैर्यदि सामर्थ्यमक्षराणां निहन्यते ।
क्रियाणां सर्वनाशः स्यादनवस्था च जायते ॥
लिखितं बलवन्नित्यं बलवत्स्वपि साक्षिषु ।
न जातु ह्रीयते लेख्यं साक्षिभिः शपथेन वा ॥
लेख्ये सति च वादेषु न स्याद्दिव्यं न साक्षिणः ।
तद्युक्तिप्रातिलेख्येन तद्विशेषेण वा पुनः ॥
लेख्यक्रियां निरस्येत न साक्षी शपथैः क्वचित् ।
बृहस्पतिः—लेख्यं त्रिंशत्समातीतमदृष्टाश्रावितं तु यत् ।
न तत्सिद्धिमवाप्नोति तिष्ठत्स्वपि च साक्षिषु ॥
नारदः—मृताः स्युः साक्षिणो यत्र धनिकर्णिकलेखकाः ।
तदप्यपार्थं लिखितं न चेदाधिः स्थिराश्रयः ॥
आदातरि तिरोभूतमाविर्भूतं मृते सति ।
अनात्तवित्तं तल्लेख्यं प्रतिदत्तमथापि वा ॥

बृहस्पतिः–उन्मत्तजलभीतानां राजभीतप्रवासिनाम् ।
अप्रगल्भामयार्तानां न लेख्यं हानिमाप्नुयात् ॥
इति लेख्यनिरूपणम् ।

---

अथ द्रव्यागमप्रकरणम् ।

बृहस्पतिः–धनमूलाः क्रियाः सर्वा यत्नास्तत्साधने मताः ।
वर्धनं रक्षणं भोग इति तस्य विधिक्रमः ॥
तत्पुनस्त्रिविधं ज्ञेयं शुक्लं शबलमेव च ।
कृष्णं च तत्र विज्ञेयः प्रभेदः सप्तधा पुनः ॥
श्रुतशौर्यतपःकन्याशिष्ययाज्यान्वयागतम् ।
धनं सप्तविधं शुक्लमुभ[यो]र्प्यस्य तद्विधः ॥
कुसीदकृषिवाणिज्यशुल्कशिल्पानुवृत्तिभिः ।
कृतोपकारादाप्तं च शबलं समुदाहृतम् ।
पाशकद्यूतद्यूतार्थप्रतिरूपकसाहसैः ॥
व्याजेनोपार्जितं यच्च तत्कृष्णं समुदाहृतम् ।
तेन क्रयो विक्रयश्च दानं ग्रहणमेव च ॥
विविधाश्च प्रयुज्यन्ते क्रियाः संभोगमेव च ।
यथाविधेन द्रव्येण यत्किंचित्कुरुते नरः ॥
तथाविधमवाप्नोति तत्फलं प्रेत्य चेह च ।
तत्पुनर्द्वादशविधं प्रतिवर्णाश्रयं स्मृतम् ॥
साधारणं स्यात् त्रिविधं शेषं नवविधं स्मृतम् ।
क्रमागतं प्रीतिदायं प्राप्तं च सह भार्यया ॥
अविशेषेण सर्वेषां वर्णानां त्रिविधं स्मृतम् ।
वैशेषिकं धनं ज्ञेयं ब्राह्मणस्य त्रिलक्षणम् ।
प्रतिग्रहणलब्धं यद्याज्यं तच्छिष्यतस्तथा ॥
त्रिविधं क्षत्रियस्यापि प्राहुर्वैशेषिकं धनम् ।
युद्धोपलब्धं करतो दण्डाच्च व्यवहारतः ॥
वैशेषिकं धनं ज्ञेयं वैश्यस्यापि त्रिलक्षणम् ।
कृषिगोरक्षवाणिज्यं शूद्रस्यैषामनुग्रहात् ॥

सर्वेषामेव वर्णानामेवं धर्म्यो धनागमः ।
विपर्ययादधर्मः स्यान्न चेदापद् गरीयसी ॥
आपत्स्वनन्तरा वृत्तिर्ब्राह्मणस्य विधीयते ।
वैश्यवृत्तिश्च तस्योक्ता न जघन्या कथंचन ।
कथंचन न कुर्वीत ब्राह्मणः कर्म वार्षलम् ॥
वृषलः कर्म न ब्राह्मं पतनीये हि ते तयोः ।
उत्कृष्टं चापकृष्टं च तयोः कर्म न विद्यते ॥
मध्यमे कर्मणी हित्वा सर्वसाधारणे हि ते ।
आपदं ब्राह्मणस्तीर्त्वा क्षत्रवृत्त्या भृते जने ॥
उत्सृजेत् क्षत्रवृत्तिं तां कृत्वा पावनमात्मनः ।
तस्यामेव तु यो भुक्तौ ब्रह्मणो रमते रसात् ॥
काण्डपृष्ठ[श्रु]तो मार्गादङ्कितोऽयं प्रकीर्तितः ।

इति द्रव्यागमप्रकरणम् ।

---

अथानुभोगानुसिद्धिः ।

पित्र्यलब्धक्रयादानरिक्थशौर्यप्रवेदनात् ।
प्राप्ते सप्तविधे भोगः स मार्गः सिद्धिमाप्नुयात् ॥
त्रिभिरेव तु या भुक्ता पुरुषैर्भूर्यथाविधि ।
लेख्याभावेऽपि तां तत्र चतुर्थः समवाप्नुयात् ॥
व्यासः—यद्विनागममत्यन्तं भुक्तं पूर्वैस्त्रिभिर्भवेत् ।
न तच्छक्यमपाकर्तुं क्रमात् त्रिपुरुषागतम् ॥
आदातुः कारणं दानं मध्ये भुक्तिस्तु सागमा ।
अन्ततो भुक्तिरेवैका संतता या चिरंतनी ॥
कात्यायनः—पञ्चत्रिंशच्च वर्षाणि पौरुषो भोग उच्यते ।
विंशद्वर्षागता भूमेर्भुक्तिः सा पौरुषी स्मृता ।
त्रिपौरुषी तात्त्रिगुणा तस्मान्नान्वेष्य आगमः ॥
वर्षाणि विंशतिं भुक्त्वा स्वामिना व्याहृता सती ।
भुक्तिः सा पौरुषी भूमेर्द्विगुणा च द्विपौरुषी ॥

त्रिपौरुषी तत्त्रिगुणा तस्मान्नान्वेष्य आगमः ।

कात्यायनः—मुख्या पैतामही भुक्तिः पैतृकी वाऽपि संमता ।
वयोपेतैरविच्छिन्ना स्थिरा षष्ट्याब्दिकी मता ॥

व्यासः—सागमो दीर्घकालश्च निश्छिद्रो निरनन्तरः ।
प्रत्यर्थिसंनिधानश्च पञ्चाङ्गो भोग इष्यते ॥
यद्येकशासनेन ग्रामक्षेत्रारामाश्च लेखिताः ।
एकदेशोपभोगेन सर्वे भुक्ता[1] भवन्ति ते ।

नारदः—लिखितं बलवन्नित्यं जीवन्तस्त्वेव साक्षिणः ।
कालातिहरणाद् भुक्तिरिति शास्त्रेषु निश्चयः ॥
भुक्तिस्तु द्विविधा प्रोक्ता सागमा नागमा तथा ।
त्रिपौरुषी या स्वतन्त्रा भवेदन्या तु सागमा ।

कात्यायनः—नोपभोगबलं कार्यमाहर्त्रा तत्सुतेन वा ।
पशुस्त्रीपुरुषादीनामिति धर्मो व्यवस्थितः ॥
आगमेन विशुद्धेन भोगो याति प्रमाणताम् ।
अविशुद्धागमो भोगः प्रामाण्यं नैव गच्छति ॥

नारदः—अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि ।
चोरदण्डेन तं पापं दण्डयेत् पृथिवीपतिः ॥
विद्यमानेऽपि लिखिते जीवत्स्वपि हि साक्षिषु ।
विशेषतः स्थावराणां यन्न भुक्तं न तत् स्थिरम् ॥
भुज्यमानान् परैरर्थान् यस्तु मोहादुपेक्षते ।
समक्षं जीवतोऽप्यस्य तद्भुक्तिः कुरुते वशे ।
प्रत्यक्षपरिभोगात्तु स्वामिनो द्विदशाः समाः ॥
आध्यादीन्यपि जीर्येयुः स्त्रीनरेन्द्रधनादृते ।
पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी ॥
परेण भुज्यमानाया धनस्य दशवार्षिकी ।
आधिश्चोपनिधिश्चोभौ न कालात्ययमर्हतः ॥
अपहार्यौ भवेतां तु दीर्घकालमवस्थितौ ।

बृहस्पतिः—पश्यन्नन्यस्य ददतः क्षितिं यो न निवारयेत् ।

---

१ ख. °क्ता वदन्ति ।

स्वामी सताऽपि लेख्येन न स तां लब्धुमर्हति ॥
भूमेरभुक्तिर्लेख्यस्य यथाकालमदर्शनम् ॥
साक्ष्यस्यास्मरणं चैव स्वार्थहानिकराणि तु ।
इत्यनुभोगानुसिद्धिः ।

---

अथान्यभोगापवादः ।

बृहस्पतिः—भुक्तिस्त्रिपौरुषी सिद्ध्यै वैरैषा नात्र संशयः ।
अनुवृत्ते सपिण्डत्वे सकुल्यानां न सिध्यति ॥
सनाभिभिर्बान्धवैश्च भुक्तं यत् स्वजनैस्तथा ।
भोगात्तत्र न सिद्धिः स्याद्भोगमन्येषु कल्पयेत् ॥
याज्ञवल्क्यः—आधिसीमोपनिक्षेपजलबालधनैर्विना ।
तथोपनिधिराजस्त्रीश्रोत्रियाणां धनैरपि ॥
अशक्ताज्ञसरोगार्तबालभीतप्रवासिनाम् ।
शासनारूढमन्येन भुक्तं भुक्त्या न हीयते ।
संप्रीत्या भुज्यमानानि न नश्यन्ति कदाचन ।
धेनुरुष्ट्रो वहन्नश्वो यश्च दम्यः प्रयुज्यते ॥
इत्यन्यभोगापवादः ।

---

अथ विच्छिन्नभोगनिर्णयः ।

छिन्नभोगे गृहक्षेत्रे संदिग्धं यत्तु जायते ।
लेख्येन भोगविद्भिर्वा साक्षिभिस्तद्विभावयेत् ।
नाम मासागमौ संख्यां दिग्भागं कालमेव च ॥
भोगच्छेदनिमित्तं च ये विदुस्तत्र साक्षिणः ।
अपृष्टास्ते तु यद्ब्रूयुः संदेहे समदृष्टयः ॥
तत्प्रामाण्यात्तु कर्तव्यमेवं धर्मो न हीयते ।
इति विच्छिन्नभोगनिर्णयः ।

---

अथ कोशपानादिविधिः ।

असाक्षिके चिरकृते पृच्छेदुत्तरसाक्षिणम् ।
शपथान् वा प्रयुञ्जीत युक्तिलेशमथापि वा ॥

नारदः—प्रमादाद्धनिनो यत्र न लेख्यं न च साक्षिणः।
अर्थाश्च मनुते वादी तत्रोक्तास्त्रिविधो विधिः॥
चोदनाप्रतिकालं च युक्तिलेशस्तथैव च।
तृतीयः शपथः प्रोक्तस्तैर्ऋणं साधयेत्क्रमात्॥
अभीक्ष्णं चोद्यमानो यः प्रतिहन्यान्न तद्वचः।
त्रिचतुष्पञ्चकृत्वो वा परतोऽर्थं स दाप्यते॥
चोदनाप्रतिघाते तु युक्तिलेशैस्तमन्वियात्।
देशकालार्थसंबन्धपरिमाणक्रियादिभिः॥
उल्काहस्तोऽग्निदो ज्ञेयः शस्त्रपाणिस्तु घातकः।
केशग्रहाभियोगेन विज्ञेयः पारदारिकः॥
कुद्दालपाणिर्विज्ञेयः सेतुभेत्ता तटादिषु।
तथा कुठारपाणिस्तु तरुच्छेत्ता प्रकीर्तितः॥
युक्तिष्वप्यसमर्थासु शपथैरनुमर्दयेत्।
अर्थकालबलापेक्षमग्न्यम्बुसुकृतादिभिः॥
धटोग्निरुदकं चैव विषं कोशश्च पञ्चमम्।
षष्ठं च तण्डुलाः प्रोक्ताः सप्तमं तप्तमाषकः॥
अष्टमं फाल इत्युक्तं नवमं धर्मसंभवम्।
दिव्यान्येतानि सर्वाणि गुरुकार्येषु योजयेत्॥
अभियोगेषु सर्वेषु कोशपानमथापि वा।
दिव्यान्येतानि सर्वाणि गोबीजकनकानि च॥
देवतापितृपादांश्च दत्तानि सुकृतानि च।
स्पृशेच्छिरांसि पुत्राणां दाराणां सुहृदां तथा॥
साधारणः समस्तानां कोशः प्रोक्तो मनीषिभिः।
दिव्यस्तु वर्जयेन्नित्यमार्तानां तु गदैर्नृणाम्॥
सद्वृत्तानां कृशार्तानां व्याधितानां तपस्विनाम्।
स्त्रीणां च न भवेद्दिव्यं यदि धर्ममपेक्षते॥
यथोक्तविधिना देयं दिव्यं दिव्यविशारदैः।
अयथोक्तप्रयुक्तं तु न सत्यं साध्यसाधने॥

त्र्यहोषिताय विधिवदेकरात्रोषिताय वा।
नित्यं देयानि दिव्यानि शुचये चाऽऽर्द्रवाससे ॥
आदित्यचन्द्रावनिलानलौ च।
द्यौर्भूमिरापो हृदयं मनश्च।
अहश्च रात्रिश्च उभे च संध्ये।
धर्मश्च जानाति नरस्य वृत्तम् ॥
दिवसस्य तु पूर्वाह्णे कोशस्तत्र विधीयते।
पूर्वाह्णे सोपवासस्य स्नातस्याऽऽर्द्रपटस्य च ॥
आस्तिकस्याव्यसनिनः कोशपानं विधीयते।
यद्भक्तः सोऽभियुक्तः स्यात्तद्देवस्य तु पाययेत् ॥
समभावे तु देवानामादित्यस्य तु पाययेत्।
दुर्गायाः पाययेच्चोरान्ये च शस्त्रोपजीविनः ॥
भास्करस्य ततोऽन्यांस्तु ब्राह्मणांस्तु न पाययेत्।
याज्ञवल्क्यः—उग्रान्देवान्समभ्यर्च्य तत्स्नानोदकमाहरेत्।
संश्राव्य पाययेत्तस्माज्जलात्तु प्रसृतित्रयम् ॥
तोय ! त्वं प्राणिनां प्राणः सृष्टेरादौ तु निर्मितः (तम्)।
शुद्धौ तु कारणं प्रोक्तं द्रव्याणां देहिनां तथा ॥
अतस्त्वं दर्शयाऽऽत्मानं शुभाशुभपरीक्षणे।
सत्येन माऽभिरक्ष त्वं वरुणेत्यभिशाप्यकम् ॥
स्वल्पापराधे देवानां स्नापयित्वाऽऽयुधानि तु।
धार्यो विकारे चाशुद्धो निशम्य शुचिरन्यथा ॥
यस्य पश्येद् द्विसप्ताहात् त्रिसप्ताहात्तथाऽपि वा।
रोगोऽग्निर्ज्ञातिमरणं राजदण्डोऽथवा भवेत् ॥
तमशुद्धं विजानीयाद्विशुद्धं तु विपर्यये।
पितामहः—त्रिरात्रात्सप्तरात्राद्वा द्वादशाहात्तथाऽपि वा।
वैकृतं यस्य दृश्येत पापकृत्समुदाहृतः ॥
नारदः—ज्वरातिसारविस्फोटशूलास्थिपरिपीडनम्।
नेत्ररुग्गलरोगश्च तथोन्मादः प्रजायते ॥
शिरोरुग्भुजभङ्गश्च दैविकाद्याधयो नृणाम्।

बृहस्पतिः—सप्ताहाद्वा द्विसप्ताहाद्यस्याऽऽर्तिर्न प्रजायते ।
पुत्रदारधनानां च स शुद्धः स्यान्न संशयः ॥
इति कोशपानादिविधिः ।

---

अथ ऋणादानप्रकरणम् ।

ऋणप्रयोगः ।

ऋणादानप्रधानानि द्यूताह्वानान्तिकानि च ।
क्रमशः संप्रवक्ष्यामि क्रियाभेदांश्च तत्त्वतः ॥
ऋणं देयमदेयं च येन यत्र यथा च यत् ।
दानग्रहणधर्मौ च ऋणादानमिति स्मृतम् ॥
अशीतिभागो वृद्धिः स्यान्मासि मासि सबन्धके ।
वर्णक्रमाच्छतं द्वित्रिचतुःपञ्चकमन्यथा ॥
मनुः—अशीतिभागं गृह्णीयान्मासाद्वार्धुषिकः शते ।
एकं शते वा गृह्णीत सतां धर्ममनुस्मरन् ।
परिपूर्णं गृहीत्वाऽऽधिं बन्धं वा सत्यलग्नकम् ।
लेख्यारूढं साक्षिमच्च ऋणं दद्याद्धनी सदा ॥
इति ऋणप्रयोगः ।

---

अथ वृद्धिविधिः ।

वृद्धिश्चतुर्विधा प्रोक्ता पञ्चधान्यैः प्रकीर्तिता ।
षड्विधाऽस्मिन् समाख्याता तत्त्वतस्तां निबोधत ॥
कायिका कालिका चैव चक्रवृद्धिरतोऽपरा ।
कारिता च शिखावृद्धिर्भोगलाभस्तथैव च ॥
व्यासः—दोह्यवाह्यक्रियायुक्ता कायिका समुदाहृता ।
प्रतिमासं प्रस्रवन्ती वृद्धिः स्यात् कालिका मता ॥
वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृता ।
कारिता नाम सा वृद्धिर्ऋणिकेन स्वयं कृता ॥
प्रत्यहं गृह्यते या तु शिखावृद्धिरुदाहृता ।
गृहात्[स्तोमश्शब्दः] क्षेत्राद्भोगलाभः प्रकीर्तितः ॥

---

१ ख. °स्तान्नि° ।

मनुः—कृतानुसारादधिका व्यतिरिक्ता न सिध्यति ।
कुसीदपदमाहुस्तं पञ्चकं च शतस्य तु ॥
कृत्वोद्धारमदत्त्वा यो याचितस्तु दिशं व्रजेत् ।
ऊर्ध्वं मासत्रयात्तस्य तद्धनं वृद्धिमाप्नुयात् ॥
पण्यं गृहीत्वा यो मूल्यमदत्त्वैव दिशं व्रजेत् ।
ऋतुत्रयस्योपरिष्टात्तद्धनं वृद्धिमाप्नुयात् ॥
नारदः—न वृद्धिः प्रीतिदत्तानां स्यादनाकारिता क्वचित् ।
अनाकारितमप्यूर्ध्वं वत्सरार्धाद्विवर्धते ॥
कात्यायनः—प्रीतिदत्तं तु यत्किंचिद्वर्धते न त्वयाचितम् ।
याच्यमानमदत्तं चेद्वर्धते पञ्चकं शतम् ।
कात्यायनः—मणिमुक्ताप्रवालानां स्वर्णस्य रजतस्य च ।
तिष्ठति द्विगुणा वृद्धिः फलस्यैवोदकस्य च ॥
मनुः—कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहिता ।
धान्ये शदे लवे वाह्ये नातिक्रामति पञ्चताम् ॥
याज्ञवल्क्यः—संततिस्तु पशुस्त्रीणां रसस्याष्टगुणा परा ।
वस्त्रधान्यहिरण्यानां चतुस्त्रिद्विगुणा परा ॥
बृहस्पतिः—उक्ता पञ्चगुणा शाके बीजे चैव तु षड्गुणा ।
लवणस्नेहमद्येषु वृद्धिरष्टगुणा मता ॥
तैलानां चैव सर्वेषां मद्यानां मधुसर्पिषाम् ।
वृद्धिरष्टगुणा ज्ञेया गुडस्य लवणस्य च ॥
स्यात् कोशानां पञ्चगुणा कार्पासस्य चतुर्गुणा ।
काष्ठानां चन्दनादीनां वृद्धिरष्टगुणा भवेत् ॥
तृणकाष्ठेष्टकासूत्रकीलचर्मास्थिवर्मणाम् ।
हेतिपुष्पफलादीनां वृद्धिस्तु न निवर्तते ॥
पितामहः—सद्यः स्याद् द्वादशगुणं चोरितं रत्नहाटकम् ।
ब्राह्मणस्वं च रूप्यादि सद्योऽप्येकादशाधिकम् ॥
रूप्यं पञ्चगुणं भूमिस्तथैवाष्टगुणा मता ।
विष्णुः—अनुक्तानां क्रमाद्वृद्धिर्नास्ति वृद्धिरतः परा ।
न वृद्धेर्वृद्धिरस्तीति धर्मकर्त्रनुशासनम् ॥

न चाप्यसंश्रिता वृद्धिरस्ति वृद्धेस्तु कर्हिचित् ।

कात्यायनः—चर्मसस्यासवद्यूतपण्यमूल्येषु सर्वदा ।
स्त्रीशुल्के न च वृद्धिः स्यात् प्रातिभाव्यागतेषु च ।
यदि स्वयंकृता न स्यात् कारिता वृद्धिराप्नुयात् ॥

संवर्तकः—न वृद्धिः स्त्रीधने लाभे निक्षेपे च यथास्थिते ।
संदिग्धे प्रातिभाव्ये च यदि स्यान्न स्वयंकृता ॥

व्यासः—प्रातिभाव्यं भुक्तबन्धमगृहीतं च दित्सतः ।
न वर्धते प्रपन्नस्य दमः शुल्कं प्रतिश्रुतम् ॥

याज्ञवल्क्यः—दीयमानं न गृह्णाति प्रयुक्तं यत् स्वकं धनम् ।
मध्यस्थस्थापितं तत् स्याद्वर्धते न ततः परम् ॥

इति वृद्धिविधिः ।

---

अथाऽऽधिविधिः ।

भरद्वाजः—आधिस्तु त्रिविधः प्रोक्तो भोग्यो गोप्यस्तथैव च ।
अर्थप्रत्ययहेतुश्च चतुर्थस्त्वाज्ञया कृतः ।

कात्यायनः—द्रव्यं गृहीत्वा वृद्ध्यर्थं भोगयोग्यं ददाति चेत् ।
जङ्गमं स्थावरं वाऽपि भोग्याधिः स तु कथ्यते ॥
गोप्याधिस्तु परेभ्यः स्वं दत्त्वाऽतो गोप्यते गृहे ।
अर्थप्रत्ययहेतुर्यः प्रत्ययाधिः स उच्यते ॥
आज्ञाधिर्नाम यो राज्ञः संसदो वाऽऽज्ञया कृतः ।

याज्ञवल्क्यः—गोप्याधिभोगे नो वृद्धिः सोपकारेऽथ हापिते ।

मनुः—यत्स्वामिनाऽननुज्ञातमाधिं भुङ्क्ते विचक्षणः ।
तेनार्धवृद्धिर्मोक्तव्या तस्य भोगस्य निष्कृतिः ॥
स्वामिना चाननुज्ञातमाधेराधिं करोति यः ।
स्वधनात्स तु हीनः स्यात्करोत्यापदि पूर्ववत् ॥
प्रच्छायाऽऽधिमृणी कुर्यात्क्रियादीन्बलतश्च यः ।
दण्डं तात्रिगुणं दत्त्वा पुनराध्यर्थदो भवेत् ॥

व्यासः—गृ(ग्र)हीतृदोषान्नष्टश्चेद्बन्धो हेमादिको भवेत् ।
ऋणं सलाभं संशोध्य तन्मूल्यं दाप्यते धनी ॥

याज्ञवल्क्यः—नष्टो देयो विनष्टश्च दैवराजकृतादृते।
स्रोतसाऽपहृते क्षेत्रे राज्ञा चैवापहारिते॥
आधिरन्योऽधिकर्तव्यो देयं वा धनिने धनम्।
बृहस्पतिः—दैवराजोपघातेन यत्राऽऽधिर्नाशमाप्नुयात्।
तत्रान्यद्दाप्यते बन्धः सोदयं वा धनं त्वृणी॥
नारदः—रक्ष्यमाणोऽपि यत्राऽऽधिः कालेनाऽऽयात्यसारताम्।
आधिरन्योऽथवा कार्यो देयं वा धनिने धनम्॥
कात्यायनः—न चेद्धनिकदोषेण निष्पतेद्वा म्रियेत वा।
व्याधिरन्योऽथ कार्यः स्यादृणान्मुच्येत नर्णिकम्॥
याज्ञवल्क्यः—उपस्थितस्य मोक्तव्यमाधिस्तेनोऽन्यथा भवेत्।
प्रयोजकेऽसति धनं कुले न्यस्याऽऽधिमाप्नुयात्॥
तत्कालकृतमूल्यो वा यत्र तिष्ठेदवृद्धिकः।
विना धारणकाद्वाऽपि विक्रीणीत ससाक्षिकम्॥
यदा तु द्विगुणीभूतमृणमाधौ तदा खलु।
मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने॥
क्षेत्रादिकं यथाभुक्तमुत्पन्नमधिकं ततः॥
मूलोदयप्रविष्टं चेत्तदाधिं प्राप्नुयादृणी।
कांचिद्वृद्धिं समाभाष्य द्रव्यमादाय तत्त्वतः॥
मत्क्षेत्रं भुङ्क्ष्व वृद्ध्यर्थमधिकं मूल्यनाशनम्।
प्रत्ययाधौ तु भोक्तव्या वृद्धिर्या पूर्णलेखिता॥
तावदेव तु भोक्तव्यमिति शास्त्रविनिश्चयः।
यत्तु तत्राधिकं वृद्धेर्देयं तद्दणिने पुनः॥
हीनं वा यत्तु तद्वृद्धेस्तावत्संपूरयेदृणी।
कात्यायनः—द्रव्यं गृहीत्वा वृद्ध्यर्थं भोगयोग्यं ददाति चेत्।
जङ्गमं स्थावरं वाऽपि भोग्याधिः स तु कथ्यते।
भोगाधिकं च भोग्याधेर्ह्रस्वं च न विचारयेत्॥
लेख्ये तु लिखितं यावत्तावद्भोक्तव्यमेव तु।
भरद्वाजः—आधौ प्रवेशने रोध ऋणिकेन कृतो यदि।
दाप्यस्तद्भोगमत्यर्थं दण्डं दत्त्वा च षड्गुणम्॥

---

१ ख. भोगाधे°।

आधेः प्रवेशनं काले मोहान्नेच्छति तद्धनी।
भोगो नश्यत्यतो ऊर्ध्वं न वर्धयति तद्धनम्॥
कूपवप्रखलस्रावा आधिग्राहेण नाशिताः।
विनाशका भवन्त्याधेरेवं कूपास्तथाऽपरे॥
याज्ञवल्क्यः—आधिः प्रणश्येद्द्विगुणे धने यदि न मोक्ष्यते।
काले कालकृतो नश्येत् फलभोग्यो न नश्यति॥
बृहस्पतिः—पूर्णे वाऽऽधौ शान्तलाभे बन्धे स्वामी धनी भवेत्।
अनिर्गते दशाहे तु ऋणी मोक्षितुमर्हति॥
व्यासः—यावत् प्रकर्षितं तत्स्यात्तावन्न धनभाग्धनी।
ऋणी न लभते बन्धं परस्परमतं विना॥
चरित्रबन्धककृतं सवृद्ध्या दापयेद्धनम्।
कात्यायनः—आधाता यत्र न स्यात्तु धनी बन्धं निवेदयेत्॥
राज्ञस्ततः स विख्यातो विक्रेय इति धारणा।
सवृद्धिकं गृहीत्वा तु शेषं राजन्यथार्पयेत्॥
आधयो द्विविधाः प्रोक्ता जङ्गमाः स्थावरास्तथा।
सिद्धिरस्योभयस्य स्याद्भोगो यद्यस्ति नान्यथा॥
आधिमेकं द्वयोर्यत्र कुर्यात्तत्प्रतिपद्भवेत्।
तयोः पूर्वतरं ग्राह्यमाधाता चोरदण्डभाक्।
क्षेत्रमेकं द्वयोर्बन्धे दत्तं यत्समकालिकम्॥
येन भुक्तं तयोः पूर्वं तस्य तत्सिद्धिमाप्नुयात्।
तुल्यकालेऽवस्थितयोर्द्वयोरपि समं भवेत्॥
प्रदाने विक्रये चैव विधिः स परिकीर्तितः।
आध्यर्थः केवलार्थश्च धनिनो यत्र दृश्यते॥
केवलं प्रथमो देयः पश्चात्स्यादाधिनिष्क्रयः।
सर्वाधीनां त्ववाग्भोगे निष्क्रयो नास्ति धर्मतः॥
बलाद्भुक्तेष्वकाले वा निष्क्रयात्त्रिगुणो दमः।
इत्याधिविधिः।

———

अथ प्रतिभूविधिः।

याज्ञवल्क्यः—भ्रातॄणामथ दम्पत्योः पितुः पुत्रस्य चैव हि।
प्रातिभाव्यमृणं साक्ष्यमविभक्ते न तु स्मृतम्॥

बृहस्पतिः—दर्शने प्रत्यये दाने ऋणिद्रव्यार्पणे तथा।
चतुष्प्रकारः प्रतिभूः शास्त्रदृष्टो मनीषिभिः॥
आहैनं दर्शयामीति साधुरित्यपरोऽब्रवीत्।
दाताऽहमेवं द्रविणमर्पयामि परोऽवदत्॥
आद्यौ तु वितथे दाप्यौ तत्कालावेदितं धनम्।
उत्तरौ तु विसंवादे तौ विना तत्सुतावपि॥
स्वामी रिपुनिरुद्धाधिकृतदण्डितसंशयाः।
रिक्थिमित्रान्तावसायिराजवृत्तवीतरागव्रतिदरिद्र-
बालवृद्धस्त्रीरुग्णा न प्रतिभुवः।

व्यासः—ऋणं पैतामहं पौत्रः प्रातिभाव्यागतं सुतः।
समं दद्यात्तत्सुतौ न दाप्याविति विनिश्चयः॥

कात्यायनः—प्रतिभावेन यद्दद्यात्पीडितो रोधनादिभिः।
त्रिपक्षात्परतस्तत्तद्द्विगुणं लब्धुमर्हति॥

प्रजापतिः—खादको वित्तहीनः स्याल्लग्नको वित्तवान्यदि।
मूल्यं तस्य भवेद्देयं न वृद्धिं दातुमर्हति॥

बृहस्पतिः—नष्टस्यान्वेषणे कालं दद्यात् प्रतिभुवे धनी।
देशानुरूपतः पक्षं मासमब्दमथापि वा॥

इति प्रतिभूविधिः।

---

अथ ऋणस्य देयादेयाविधिः॥

परहस्ताद् गृहीतं स्वं कुसीदविधिना त्वृणम्।
येन यत्र यथा देयमदेयं चोच्यतेऽधुना॥

कात्यायनः—यद्देयं पितृभिर्नित्यं तदभावे च तत्सुतैः।
तद्धनं पुत्रपौत्रैर्वा देयं तत्स्वामिने तदा॥

प्रजापतिः—दुर्भिक्षे राष्ट्रसंबाधे धर्मकार्ये तथाऽऽपदि।
ऋणं देयं मूल्यमेव न वृद्धिरिति निश्चयः॥

पूर्वं पैतामहं देयं पित्र्यं देयं ततः परम्।
पश्चाद्देयमथाऽऽत्मीयमेवं देयमृणं सुतैः॥
बृहस्पतिः—पितर्युपरते पुत्रा ऋणं दद्युर्यथांशतः।
विभक्ता अविभक्ता वा यो वा तामुद्वहेद्धुरम्॥
नारदः—ऋणमात्मीयवत् पित्र्यं पुत्रैर्देयं विभावितम्।
पैतामहं समं देयमदेयं तत्सुतेन तु॥
क्रमादभ्यागतं प्राप्य पुत्रैर्नर्णं समुद्धृतम्।
दद्युः पैतामहं पौत्रास्तच्चतुर्थान्निवर्तते॥
याज्ञवल्क्यः—पितरि प्रोषिते प्रेते व्यसनाभिप्लुतेऽपि वा।
पुत्रपुत्रैर्ऋणं देयं निह्नवे साक्षिभावितम्॥
अनेकार्थान्नियोगे तु यावत् संसाधयेद्धनी।
साक्षिभिस्तावदेवासौ लभते नाधिकं ततः॥
विद्यमानेऽपि रोगार्ते स्वदेशात् प्रोषितेऽपि वा।
विंशत्संवत्सराद्देयमृणं पितृकृतं सुतैः॥
एकच्छायाप्रविष्टानां दाप्यो यस्तत्र दृश्यते।
प्रोषिते तत्सुतः सर्वं पित्रंशं तु मृते सुतः॥
पितामहः—अविभक्ता ऋणं दद्युः पित्र्यं मातृकमेव वा।
तदभावे विभक्ताश्च न तु तेन प्रतिश्रुतम्॥
नारदः—पितृव्येणाविभक्तेन भ्रात्रा वा यदृणं कृतम्।
मात्रा वा यत् कुटुम्बार्थे दद्युस्तद्रिक्थिनोऽखिलम्॥
कात्यायनः—नाप्राप्तव्यवहारैस्तु पितर्युपरते क्वचित्।
कालेन विधिना देयं वसेयुर्नरकेऽन्यथा॥
दक्षप्रजापतिः—तपस्वी चाग्निहोत्री च ऋणवान् म्रियते यदि।
तपश्चैवाग्निहोत्रं च तत्सर्वं धनिनां धनम्।
बृहस्पतिः—उद्धारादिकमादाय स्वामिने न ददाति यः।
स तस्य दासो भृत्यः स्त्री पशुर्वा जायते गृहे॥
अतः पुत्रेण जातेन स्वार्थमुत्सृज्य यत्नतः।
ऋणात् पिता मोचनीयो यथा न नरकं व्रजेत्॥

---

१ ख. न प्रा°। २ ख. °हारस्तु।

याज्ञवल्क्यः–गोपशौण्डिकशैलूषरजकव्याधयोषिताम् ।
ऋणं दद्यात् पतिस्तासां यस्माद्वृत्तिस्तदाश्रया ॥

कात्यायनः–निर्धनैरनपत्यैश्च यत्कृतं शौण्डिकादिभिः ।
तत्स्त्रीणामुपभोक्ता तु दद्यात्तदृणमेव हि ॥

नारदः--परपूर्वाः स्त्रियस्त्वन्याः सप्त प्रोक्ता यथाक्रमम् ।
पुनर्भूस्त्रिविधास्तासां स्वैरिणी तु चतुर्विधा ॥
कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता ।
पुनर्भूः प्रथमा सोक्ता पुनः संस्कारकर्मणा ।
देशधर्मानवेक्ष्य स्त्री गुरुभिर्या प्रदीयते ।
उत्पन्नसाहसाऽन्यस्मै सा द्वितीया प्रकीर्तिता ॥
असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते ।
सवर्णाय सपिण्डाय सा तृतीया प्रकीर्तिता ॥
स्त्री प्रसूताऽप्रसूता वा पत्यौ स्वस्थे तु जीवति ।
कामात्समाश्रयेदन्यं प्रथमा स्वैरिणी तु सा ।
कौमारं पतिमुत्सृज्य याऽन्यं पुरुषमाश्रिता ॥
पुनः पत्युर्गृहं यायात् सा द्वितीया प्रकीर्तिता ।
मृते भर्तरि या नारी देवरादीनपास्य तु ॥
उपगच्छेत्परं कामात्सा तृतीया प्रकीर्तिता ।
प्राप्ता देशाद्धनक्रीता क्षुत्पिपासातुरा च या ॥
तवाहमित्युपगता सा चतुर्था(र्थी) प्रकीर्तिता ।
अन्तिमा स्वैरिणी सा च पुनर्भूः प्रथमा च या ॥
ऋणं तयोः पतिकृतं दद्याद्यस्तु उपाश्रितः ।
अधनस्य ह्यपुत्रस्य मृतस्योपैति यः स्त्रियम् ॥
ऋणं वोढुः स भजते तदेवास्य धनं स्मृतम् ।
धनस्त्रीहारिपुत्राणामृणभाग्यो धनं हरेत् ॥
पुत्रोऽसतोः स्त्रीधनिनोः स्त्री हारी धनिपुत्रयोः ।

इति ऋणस्य देयादेयविधिः ।

———

## अथोद्ग्रहणविधिः ।

मनुः—धर्मेण व्यवहारेण च्छलेनाऽऽचरितेन च ।
प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन वा ॥

बृहस्पतिः—प्रतिपन्नमृणं दाप्यः सामादिभिरुपक्रमैः ।
धर्माव(र्मोप)धिबलात्कारैर्गृहसंरोधनेन च ॥

सुहृत्संबन्धिसंदिष्टैः सामोक्त्याऽनुगमेन च ।
प्रायेण च ऋणी दाप्यो धर्म एष उदाहृतः ॥

छद्मना याचितं वाऽर्थमानीय ऋणिकाद्धनी ।
अन्वाहितादि वाऽऽहृत्य दाप्यते यत्र सोपधिः ॥

बद्ध्वा स्वगृहमानीय ताडनाद्यैरुपक्रमैः ।
ऋणिको दाप्यते यत्र बलात्कारः स कीर्तितः ॥

कर्मणाऽपि समं कुर्याद्धनिकं वाऽधमार्णिकः ।
समोऽपकृष्टजातिश्च दद्याच्छ्रेयांस्तु तच्छनैः ॥

हीनजातिं परिक्षीणमृणार्थे कर्म कारयेत् ।
ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम् ॥

मनुः—यत्साधनं तच्छन्ने(ले)न वेदयेद्धनिको नृपम् ।
स राज्ञे(ज)र्णचतुर्भागं दद्यात्तस्य च तद्धनम् ॥

अनिवेद्य तु राज्ञे यः संदिग्धेऽर्थे प्रवर्तते ।
प्रसह्य स विनेयः स्यात् स चार्थोऽस्य न सिध्यति ॥

रूपसंख्याविशेषेषु यत्र भ्रान्तिर्द्वयोर्भवेत् ।
देयानादेययोर्वाऽपि संदिग्धोऽर्थः स कीर्तितः ॥

पीडयेत्तु धनी यत्र ऋणिकं न्यायवादिनम् ।
तस्मादर्थात्स हीयेत तत्समं प्राप्नुयाद्दमम् ॥

भरद्वाजः—ऋणिकस्य धनाभावे विक्रयश्चाऽऽनुपूर्वशः ।
क्षेत्राभावे तथाऽऽरामस्तस्याभावे गृहक्रयः ॥

द्विजातीनां गृहाभावे कालहारो विधीयते ।
हिरण्ये द्विगुणीभूते मृते नष्टेऽधमर्णिके ।
द्रव्यं तदीयं संगृह्य विक्रीणीत ससाक्षिकम् ॥

रक्षेद्वा कृतमूल्यं तु दशाहं जनसंसदि।
ऋणानुरूपं परतो गृह्णीतान्यच्च वर्जयेत्॥
साधनं च स्थिरीकृत्य गणनाकुशलैर्नरैः।
स्वबन्धुज्ञातिविहितं प्रगृह्णन्नापराध्नुयात्॥
इत्युद्ग्रहणविधिः।

---

अथ जयपराजयदण्डविधिः।
ऋणं दातुमशक्तो यः कर्तुमिच्छेत्पुनः क्रियाम्।
स दत्त्वा निर्जितां वृद्धिं करणं परिवर्तयेत्॥
अदर्शयित्वा तत्रैव हिरण्यं परिवर्तयेत्।
याज्ञवल्क्यः—राज्ञाऽधमर्णिको दाप्यः साधिताद्दशकं शतम्॥
पञ्चकं तु शतं दाप्यः प्राप्तार्थो ह्युत्तमर्णिकः।
मनुः—ऋणे देये प्रतिज्ञाते पञ्चकं शतमर्हति॥
अपह्नुते तद्द्विगुणं तन्मनोरनुशासनम्।
इति जयपराजयदण्डविधिः।

---

अथ ऋणादानप्रकरणम्।
याज्ञवल्क्यः—गृहीतानुक्रमाद्दाप्यो धनिनामधमर्णिकः।
दत्त्वा तु ब्राह्मणायैव नृपतेस्तदनन्तरम्॥
नारदः—ब्राह्मणस्य तु यद्देयमात्मजस्य स नास्ति चेत्।
सकुले(ल्ये)भ्यः स निर्वपेत्तदभावेऽस्य बन्धुषु॥
यदा तु न सकुल्याः स्युर्न च संबन्धिबान्धवाः।
तदा दद्याद्द्विजातिभ्यस्तेष्वसत्स्वप्सु निक्षिपेत्॥
लेख्यस्य पृष्ठेऽभिलिखेद्दत्त्वा दत्त्वा धनं त्वृणी।
धनी चोपगमं दद्यात्स्वहस्तपरिचिह्नितम्॥
नारदः—न दद्याद्याच्यमानस्तु शेषहानिमवाप्नुयात्।
दत्त्वर्णं पाटयेल्लेख्यं शुद्ध्यै वाऽन्यत्तु कारयेत्॥
साक्षिमच्च भवेद्यद्धि तद्दातव्यं ससाक्षिकम्।

भरद्वाजः—ऋणिकस्यार्थसद्भाव उत्तमर्णे भवेद्यदि।
तस्मिन्नृणे हि तत्काले तत्क्रमेण विधीयते॥
व्यासः—आदानकालिकादर्थाद्द्विगुणं यदि कालिकम्।
मूल्यमात्रं तु पादोनं तदर्धं पादमेव वा॥
द्विगुणादिक्रमेणैव धनिको लभते धनम्।

इति ऋणादानप्रकरणम्।

अथ उपनिधिप्रकरणम्।

नारदः—स्वद्रव्यं यत्र विस्रम्भाद्विक्षिपत्यविशङ्कितः।
निक्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैः॥
बृहस्पतिः—राजचोराराातिभयाद्दायादीनां च वञ्चनात्।
स्थाप्यतेऽन्यगृहे द्रव्यं न्यासः स परिकीर्तितः॥
अनाख्यातं व्यवहितमसंख्यातमदर्शितम्।
मुद्राङ्कितं च यद्दत्तं तदौपनिधिकं स्मृतम्॥
कात्यायनः—यच्च स्वकार्यसिद्ध्यर्थं प्रतिदेयं यथा तथा।
याचित्वा प्रगृहीतं तु याचितं तु तदुच्यते॥
अनुमार्गेण कार्येषु अमुष्य वचनान्मया।
देयं त्वयीति यद्दत्तं तदन्वाहितमुच्यते॥
मनुः—कुलजे वृत्तसंपन्ने धर्मज्ञे सत्यवादिनि।
महापक्षे धनी न्याय्ये निक्षेपं निक्षिपेद्बुधः॥
बृहस्पतिः—ससाक्षिकं रहोदत्तं द्विविधं समुदाहृतम्।
पुत्रवत् परिपाल्यं तद्विनश्यत्यनवेक्षणात्॥
ददतो यद्भवेत्पुण्यं हेमरूप्याम्बरादिकम्।
तत् स्यात् पालयतो न्यासं यथा च शरणागतम्॥
भर्तृद्रोहे यथा नार्याः पुंसः पुत्रसुहृद्वधे।
दोषो भवेत्तथा न्यासे भक्षितोपेक्षिते नृणाम्॥
बृहस्पतिः—दैवराजोपघातेन यदि नाशमवाप्नुयात्।
गृ(ग्र)हीतुर्द्रव्यसहितं तत्र दोषो न विद्यते।
याज्ञवल्क्यः—न दाप्योपहृतं तं तु राजदैविकतस्करैः॥

बृहस्पतिः—भेदेनोपेक्षया न्यासं गृहीतं यदि नाशयेत् ।
याच्यमानो न दद्याद्वा दाप्यः स्यात् सोदयं भवेत् ॥
याज्ञवल्क्यः—भ्रष्टश्चेन्मार्गितेऽदत्ते दाप्यो दण्डं च तत्समम् ।
व्यासः—भक्षितं सोदयं दाप्यः समं दाप्य उपेक्षितम् ॥
किंचिन्न्यूनं प्रदाप्यः स्याद् द्रव्यमज्ञाननाशितम् ।
मनुः—यो निक्षेपं नार्पयति यश्चानिक्षिप्य याचते ।
तावुभौ चोरवच्छास्यौ दाप्यौ वा तत्समं दमम् ॥
बृहस्पतिः--रहोदत्ते निधौ यत्र विसंवादोऽपि जायते ।
विभावकं तत्र दिव्यमुभयोरपि च स्मृतम् ॥
गृहीत्वाऽपह्नवे यत्र साक्षिभिः शपथेन वा ।
विभाव्यं दापयेन्न्यासं तत्समं विनयं तथा ॥
मिथो दायः कृतो येन गृहीतो मिथ एव वा ।
मिथ एव प्रदातव्यो यथा दायस्तथा ग्रहः ॥
समुद्रे नाप्नुयात् किंचिद्यदि तस्मान्न संहरेत् ।
नारदः—एष एव विधिर्दृष्टो याचितान्वाहितादिषु ।
शिल्पिषूपनिधौ न्यासे प्रतिन्यासे तथैव च ॥
कात्यायनः—क्षयमूलं करार्थं च निक्षेपापह्नवे तथा ।
चक्रवृद्ध्या विवर्धेत यावत् पञ्चगुणं भवेत् ॥
याचितान्वाहितन्यासनिक्षेपादिष्वयं विधिः ।
त्रिपक्षात्परतो द्व्यर्थं त्रिमासात् त्रिगुणं भवेत् ॥
अत ऊर्ध्वं विवर्धेत चक्रवृद्धिव्यवस्थया ।
इत्युपनिधिप्रकरणम् ।

---

अथास्वामिविक्रयप्रकरणम् ।

नारदः—निक्षिप्तं वा परद्रव्यं नष्टं लब्ध्वाऽपहृत्य वा ।
विक्रीयतेऽसमक्षं यत् स ज्ञेयोऽस्वामिविक्रयः ॥
याज्ञवल्क्यः—विक्रेतुर्दर्शनाच्छुद्धिः स्वामी द्रव्यं नृपो दमम् ।
क्रेता मूल्यमवाप्नोति तस्माद्यस्तस्य विक्रयी ॥
मनुः—अपहार्यो भवेदेष सान्वयः षट्शतं दमम् ।
निरन्वयो नावसरः प्राप्तः स्याच्चोरकिल्बिषम् ॥

अनेन विधिना शास्यः कुर्वन्नस्वामिविक्रयम् ।
अज्ञानाज्ज्ञानपूर्वं तु चोरवद्दण्डमर्हति ।
मनुः—अस्वामिना कृतो यस्तु क्रयो विक्रय एव वा ॥
अकृतः स तु विज्ञेयो व्यवहारे यथास्थितः ।
कात्यायनः—अस्वामिविक्रयं दानमाधिं चापि निवर्तयेत् ॥
नारदः—द्रव्यमस्वामिविक्रीतं पूर्वस्वामी तदाप्नुयात् ।
संभोगो दृश्यते यत्र न दृश्येताऽऽगमः क्वचित् ॥
आगमः कारणं तत्र न संभोग इति स्थितिः ।
स्वं लभेतान्याविक्रीतं क्रेतुर्दोषोऽप्रकाशिते ॥
हीनाद्रहो हीनमूल्ये वेलाहीने च तस्करः ।
बृहस्पतिः—अविज्ञाताश्रयात् क्रीतं विक्रेता यत्र वा मृतः ।
स्वामी दत्त्वाऽर्धमूल्यं तु प्रगृह्णीयात् स्वकं धनम् ॥
विक्रयेऽपि तु यः क्रेतुर्भुक्तियोग्यं न साधयेत् ।
स तस्मै तत्समं दद्यादन्यथा चोरदण्डभाक् ॥
कात्यायनः—यत्र क्रीतोऽहितानां तु विरोधे निष्क्रयो भवेत् ।
क्षेत्रं तत्सदृशं दद्यान्मूल्यं वा क्रेतुरिच्छया ॥

इत्यस्वामिविक्रयप्रकरणम् ।

---

अथ संभूयसमुत्थानप्रकरणम् ।

वणिक्प्रभृतयो यत्र कर्म संभूय कुर्वते ।
तत्संभूयसमुत्थानं व्यवहारपदं स्मृतम् ॥
बृहस्पतिः—अशक्तालसरोगार्तमन्दभाग्यनिराश्रयाः ।
वाणिज्याद्याः सहैतैस्तु न कर्तव्या बुधैः क्रियाः ॥
कुलीनदक्षानलसैः प्राज्ञैर्नाणकवेदिभिः ।
आयव्ययज्ञैः शुचिभिः शूरैः कुर्यात् सह क्रियाम् ॥
नारदः—समोऽतिरिक्तो हीनो वा यत्रांशो यस्य यादृशः ।
क्षयव्ययौ तथा वृद्धिस्तत्र तस्य तथाविधः ॥
परीक्षकाः साक्षिणश्च त एवोक्ताः परस्परम् ।
संदिग्धेऽर्थेऽवञ्चनायां न चेद् विद्वेषसंयुताः ॥

बृहस्पतिः—यः कश्चिद्वञ्चकस्तेषां विज्ञातः क्रयविक्रये ।
शपथैः स विशोध्यः स्यात् सर्ववादेष्वयं विधिः ॥
याज्ञवल्क्यः—जिह्मं त्यजेयुर्निर्लाभमशक्तोऽन्येन कारयेत् ।
क्षयहानिर्यदा तत्र दैवराजकृता भवेत् ॥
सर्वेषामेव संप्रोक्ता कल्पनीया यथांशतः ।
अनिर्दिष्टो वार्यमाणः प्रमादाद्यस्तु नाशयेत् ॥
तेनैव तद्भवेद्देयं सर्वेषां समवायिनाम् ।
नारदः—दैवतस्कर राजाग्निव्यसने समुपस्थिते ।
यस्तत् स्वशक्त्या रक्षेत्तु तस्यांशो दशमः स्मृतः ॥
एकस्य चेत् स्यान्मरणं दायादोऽस्य तदाप्नुयात् ।
अन्यो वाऽसति दायादे दत्तश्चेत् सर्व एव वा ।
बृहस्पतिः—राजाऽऽददीत षड्भागं नवमं द्वादशं तथा ।
क्षत्रविट्शूद्रजातानां विप्राद् गृह्णीत विंशकम् ॥
मनुः—प्रनष्टस्वामिकं रिक्थं राजा त्र्यब्दं निधापयेत् ।
अर्वाक् त्र्यब्दाद्धरेत् स्वामी परेण नृपतिर्हरेत् ॥
अस्वामिकमदायादं दशवर्षस्थितं ततः ।
राजा तदात्मसात्कुर्यादेवं धर्मो न हीयते ॥
ऋत्विजो व्यसनेऽप्येवमन्यस्तत्कर्म वि(नि)स्तरेत् ।
लभेत दक्षिणाभागं स तस्मात् संप्रकल्पितम् ।
श्रूयतां कर्षकादीनां विधानमिदमुच्यते ।
वाह्यवाहकबीजाद्यैः क्षेत्रोपकरणेन च ॥
ये समानास्तु तैः सार्धं कृषिः कार्या विजानता ।
पर्वते नगराभ्याशे तथा राजपथस्य च ॥
ऊषरं मूषिकव्याप्तं क्षेत्रं यत्नेन वर्जयेत् ।
गर्तानूपं सुसेकं च समन्तात्क्षेत्रसंयुतम् ॥
संकृष्टं च कृतं काले वापयेत्फलमश्नुते ।
कृशातिवृद्धं क्षुद्‌र्ध च रोगिणं प्रपलायिनम् ॥
काणं खञ्जं च नाऽऽदद्याद्धुर्यं प्राज्ञः कृषीवलः ।
एष धर्मः समाख्यातः कर्षकाणां पुरातनः ॥

हेमकारादयो यत्र शिल्पं संभूय कुर्वते ।
कर्मानुरूपनिर्वेशं लभेरंस्ते यथांशतः ॥
कात्यायनः—शिक्षकाभिज्ञकुशला आचार्याश्चेति शिल्पिनः ।
एकद्वित्रिचतुर्भागान्लभेरंस्ते यथोत्तरम् ॥
बृहस्पतिः—हर्म्यं देवगृहं वाऽपि चार्मिकोपस्कराणि च ।
संभूय कुर्वतां तेषां मुख्योऽध्यर्धांशमर्हति ॥
नर्तकानामेष एव धर्मः सद्भिरुदाहृतः ।
तालज्ञो लभतेऽध्यर्धं गायकास्तु समांशिनः ॥
कात्यायनः—परराष्ट्राद्धनं यत्स्याच्चोरैः स्वाम्याज्ञया हृतम् ।
राज्ञे दशांशमुत्सृज्य विभजेरन्यथाविधि ॥
चोराणां मुख्यभूतस्तु चतुरोंऽशांस्ततो हरेत् ।
शूरोंऽशांस्त्रीन्समर्थो द्वौ शेषस्त्वेकैकमेव वा ॥
तेषां च प्रसृतानां यो ग्रहणं समवाप्नुयात् ।
तन्मोक्षणाय यद्दत्तं वहेयुस्ते यथांशतः ॥
बहूनां संमतो यस्तु दद्यादेको धनं नरः ।
करणं कारयेद्वाऽपि सर्वैरेव कृतं भवेत् ।
इति संभूयसमुत्थानप्रकरणम् ।

---

अथ दत्ताप्रदानिकप्रकरणम् ।

नारदः—दत्त्वा द्रव्यमसम्यग्यः पुनरादातुमिच्छति ।
दत्ताप्रदानिकं नाम तद्विवादपदं स्मृतम् ॥
अदेयमथ देयं च दत्तं चादत्तमेव च ।
व्यवहारेषु विज्ञेयो दानमार्गश्चतुर्विधः ॥
तत्रेहाष्टावदेयानि देयमेकविधं स्मृतम् ।
दत्तं सप्तविधं दद्याददत्तं षोडशात्मकम् ॥
नारदः—अन्वाहितं याचितकमाधिः साधारणं च यत् ।
निक्षेपः पुत्रदाराश्च सर्वस्वं चान्वये सति ॥
आपत्स्वपि हि कष्टासु वर्तमानेन देहिना ।
अदेयान्याहुराचार्या यच्चान्यस्मै प्रतिश्रुतम् ॥

क्रमागतं गृहक्षेत्रं पित्र्यं पैतामहं तथा ।
पुत्रपौत्रसमृद्धस्य अदेयमननुज्ञया ॥
धर्मार्थं येन दत्तं स्यात्कस्मैचिद्याचते धनम् ।
पश्चाच्च न तथा कुर्याददेयं न तु तद्भवेत् ॥
कुडु(टु)म्बभरणाद्द्रव्यं यत्किंचिदतिरिच्यते ।
तद्देयमुपरुध्याथ ददद्दोषमवाप्नुयात् ॥
दानमेकात्मकं प्राहुस्तद्भवेत्तोयपूर्वकम् ।
विना तोयप्रदानेन धर्मदानं न विद्यते ।
कात्यायनः-सर्वस्वं गृहवर्जं तु कुडु(टु)म्बभरणाधिकम् ।
यद्द्रव्यं तत्स्वकं देयमदेयं स्याततोऽन्यथा ॥
पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात्प्रत्युपकारतः ।
स्त्रीशुल्कानुग्रहार्थं च दत्तं सप्तविधं स्मृतम् ॥
बृहस्पतिः-सौदायिकं क्रमायातं शौर्यप्राप्तं च यद्भवेत् ।
स्त्रीज्ञातिस्वाम्यनुज्ञातं दत्तं सिद्धिमवाप्नुयात् ॥
याज्ञवल्क्यः-प्रतिग्रहः प्रकाशः स्यात्स्थावरस्य विशेषतः ।
देयं प्रतिश्रुतं चैव दत्त्वा नापहरेत्पुनः ॥
कात्यायनः-स्वेच्छया यः प्रतिश्रुत्य ब्राह्मणाय प्रतिग्रहम् ।
न दद्यादृणिवद्दाप्यः प्राप्नुयात्पूर्वसाहसम् ॥
प्रतिश्रुतार्थादानेन दत्तस्योच्छेदनेन च ।
विविधान्नरकान्याति तिर्यग्योनौ च जायते ॥
नारदः-अदत्तं तु भयक्रोधशोकवेगसमन्वितैः ।
तथोत्कोचपरीहासव्यत्यासच्छलयोगतः ॥
बालमूढास्वतन्त्रार्तमत्तोन्मत्तापवर्जितैः ।
कर्ता ममेयं कर्मेति प्रतिलाभेच्छया च तत् ॥
अपात्रे पात्रमित्युक्ते कार्ये वाऽधर्मसंहिते ।
दत्तं यत्स्यादविज्ञानाददत्तं तदपि स्मृतम् ॥
कात्यायनः--कामक्रोधस्वतन्त्रार्तक्लीबोन्मत्तप्रमोहितैः ।
व्याजाच्च परिहासाच्च यद्दत्तं तत्पुनर्भवेत् ॥
मदूर्ध्वमिति यद्दत्तं न तत्सत्त्वापहं भवेत् ।
तेनैदानीमदत्तत्वान्मृते रिक्थिनि संक्रमात् ॥

कात्यायनः--नियुक्तो यस्तु कार्येषु स चेदुत्कोचमाप्नुयात्।
स दाप्यस्तद्धनं कृत्स्नं दमं चैकशताधिकम्॥
अनियुक्तस्तु कार्यार्थमुत्कोचं यद्यवाप्नुयात्।
कृतप्रत्युपकारार्थं तस्य दोषो न विद्यते॥
प्राणसंशयमापन्नं यो मामुत्तारयेदितः।
सर्वस्वं तस्य दास्यामीत्युक्तोऽपि न तथा भवेत्।
यदि कार्यस्य सिद्ध्यर्थमुत्कोचः स्याच्छ्रुतिश्रुतः॥
तस्मिन्नपि प्रसिद्धेऽर्थे न देयः स्यात्कथंचन।
अथ प्रागेव दत्तं स्यात्प्रतिदाप्यः स तद्बलात्॥
दण्डं चैकादशगुणमाहुर्धर्मविदो जनाः।
नारदः--स्तेनसाहसिकोद्वृत्तपारदारिकशंसनात्॥
दर्शनाद्वृत्तनष्टस्य तथाऽसत्यप्रवर्तनात्।
प्राप्तमेतैस्तु यत्किंचिदुत्कोचाख्यं तदुच्यते।
न दाता तत्र दण्ड्यः स्यान्मध्यस्थश्चैव दोषभाक्॥
योगागमनविक्रीतं योगदानप्रतिग्रहम्।
यत्र वाऽप्युपधिं पश्येत्तत्सर्वं विनिवर्तयेत्॥
नारदः--गृह्णाति दत्तं यो मोहाद्यश्चादेयं प्रयच्छति।
दण्डनीयावुभावेतौ धर्मज्ञेन महीक्षिता॥
अदेयं यश्च गृह्णाति यश्चादेयं प्रयच्छति।
तावुभौ चोरवच्छास्यौ दाप्यौ चोत्तमसाहसम्॥
कात्यायनः--स्वस्थेनाऽऽर्तेन वा दत्तं श्रावितं धर्मकारणात्।
अदत्त्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः॥
इति दत्ताप्रदानिकप्रकरणम्।

---

अथाभ्युपेत्याशुश्रूषाप्रकरणम्॥

अभ्युपेत्य तु शुश्रूषां यस्मान्न प्रतिपद्यते।
अशुश्रूषाभ्युपेत्यैतद्विवादपदमुच्यते॥
शुश्रूषकः पञ्चविधः शास्त्रदृष्टो मनीषिभिः।
चतुर्विधः कर्मकरः शेषा दासास्त्रिपञ्चकाः॥

शिष्यान्तेवासिभृतकाश्चतुर्थस्त्वधिकर्मकृत् ।
एते कर्मकरा ज्ञेया दासास्तु गृहजादयः ॥
बृहस्पतिः—विद्या त्रयी समाख्याता ऋग्यजुस्सामलक्षणा ।
तदर्थं गुरुशुश्रूषां प्रकुर्याच्च प्रचोदिताम् ॥
अविद्याग्रहणाच्छिष्यः शुश्रूषेत् प्रयतो गुरुम् ।
तद्वृत्तिर्गुरुदारेषु गुरुपुत्रे तथैव च ॥
विज्ञानमुच्यते शिल्पं हेमरूप्यादिसंस्कृतः ।
नृत्तादिकं च, तत्प्राप्तं कुर्यात्कर्म गुरोर्गृहे ॥
स्वशिल्पमिच्छन्नाहर्तुं बान्धवानामनुज्ञया ।
आचार्यस्य वसेदन्ते कालं कृत्वा सुनिश्चितम् ॥
आचार्यः शिक्षयेदेनं स्वगृहे दत्तभोजनम् ।
न चान्यत् कारयेत् कर्म पुत्रवच्चैनमाचरेत् ।
यस्तु न ग्राहयेच्छिल्पं कर्माण्यन्यानि कारयेत् ॥
प्राप्नुयात् साहसं पूर्वं तस्माच्छिष्यो निवर्तते ।
शिक्षयन्तमदुष्टं च यस्त्वाचार्यं परित्यजेत् ॥
बलात्कारयितव्यः स्याद्वधबन्धौ च सोऽर्हति ।
नारदः—गृहीतशिल्पः समयं कृत्वाऽऽचार्यं प्रदक्षिणम् ।
भक्तितश्चानुमन्यैनमन्तेवासी निवर्तते ॥
शिक्षितोऽपि कृतं कालमन्तेवासी समापयेत् ।
तत्र कर्म च यत्कुर्यादाचार्यस्यैव तत्फलम् ॥
बहुधाऽर्थभृतः प्रोक्तस्तथा भागभृतोऽपरः ।
हीनमध्योत्तमत्वं च सर्वेषामेव चोदितम् ॥
उत्तमस्त्वायुधीयोऽत्र मध्यमस्तु कृषीवलः ।
अधमो भारवाही स्यादित्येवं त्रिविधं स्मृतम् ॥
बृहस्पतिः—द्विप्रकारो भागभृतः कृषिगोजीवनात्स्मृतः ।
जातसस्यात्तथा क्षीराल्लभते परिभाषितम् ।
अर्थेष्वधिकृतो यः स्यात् कुटुम्बस्य तथोपरि ॥
सोऽधिकर्मकरो ज्ञेयः स च कौटुम्बिकः स्मृतः ।
शुभकर्मकरा ह्येते चत्वारः समुदाहृताः ॥

जघन्यकर्मभाजस्तु शेषा दासास्त्रिपञ्चकाः ।
कर्मापि द्विविधं प्रोक्तमशुभं शुभमेव च ॥
अशुभं दासकर्मोक्तं शुभमन्यदुदीरितम् ।
नारदः—गृहद्वाराशुचिस्थानरथ्यावस्करशोधनम् ॥
गुह्याङ्गस्पर्शनोच्छिष्टविण्मूत्रग्रहणोज्झ(ज्झ)नम् ।
इच्छतः स्वामिनश्चाङ्गैरुपस्थानमथान्ततः ॥
अशुभं कर्म विज्ञेयं शुभमन्यदतः परम् ।
कात्यायनः—विण्मूत्रोत्सर्जनं चैव नग्नत्वकपरिमार्जनम् ॥
प्रायो दाससुतः कुर्यात् पादादिग्रहणं च यत् ।
नारदः—गृहजातस्तथा क्रीतो लब्धोदायादुपागतः ।
अनाकालभृतस्तद्वदाहितः स्वामिना च यः ॥
मोक्षितो ऋणतः शक्ताद्युद्धप्राप्तः पणे जितः ।
तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ॥
भक्तदासश्च विज्ञेयस्तथैव वडवाहृतः ।
विक्रेता चाऽऽत्मनः शास्त्रे दासाः पञ्चदश स्मृताः ॥
अत्र पूर्वश्चतुर्वर्गो दासत्वान्न विमुच्यते ।
प्रसादात् स्वामिनोऽन्यत्र दास्यमेषां क्रमागतम् ॥
विक्रीणीतेऽस्वतन्त्रः सन् य आत्मानं नराधमः ।
न जघन्यतमस्तेषां सोऽपि दास्यान्न मुच्यते ॥
याज्ञवल्क्यः—प्रव्रज्यावसितो राज्ञो दास आमरणान्तिकम् ।
अनाकालभृतो दास्यान्मुच्यते गोयुगं ददत् ॥
भक्षितं वाऽपि दुर्भिक्षे न तच्छुध्येत कर्मणा ।
आहितोऽपि धनं दत्त्वा स्वामी यद्येनमुद्धरेत् ॥
ऋणं तु सोऽभयं दत्त्वा ऋणी दास्याद्विमुच्यते ।
युद्धप्राप्तः पणजितस्तवाहमिति चाऽऽगतः ॥
प्रीतिशीर्षप्रदानेन मुच्येरंस्तुल्यकर्मणा ।
कृतकालव्युपरमात् कृतकोऽपि विमुच्यते ॥
भक्तस्योपेक्षणात्सद्यो भक्तदासः प्रमुच्यते ।

निग्रहाद् वडवायाश्च मुच्यते वडवाहृतः।
कात्यायनः—स्वदासीं यस्तु संगच्छेत् प्रसूता च भवेत्ततः॥
अपेक्षणीयँबीजा स्याददासी सान्वया तु सा।
दासीसुताश्च दासाः स्युर्दास्याः पत्या परेण वा॥
उत्पादको यदि स्वामी न दासा दारसूनवः।
यश्चैषां स्वामिनं कश्चिन्मोक्षयेत् प्राणसंशयात्॥
स दासत्वाद्विमुच्येत पुत्रभावं भजेत च।
स्वदासमिच्छेद्यः कर्तुमदासं प्रीतमानसः॥
स्कन्धादादाय तस्यासौ भिद्यात्कुंम्भं सहाम्भसा।
अक्षताभिः सपुष्पाभिर्मूर्ध्नि चैनमवाकिरेत्॥
न दास इति चोक्त्वा त्रिः प्राङ्मुखं तमथोत्सृजेत्।
कात्यायनः—दासेनोढा त्वदासी या साऽपि दासीत्वमाप्नुयात्।
यः स्याद्भर्तुः प्रभुस्तस्य स्वाम्यधीनोऽप्रभुः स्मृतः॥
भार्या पुत्राश्च दासश्च त्रय एवाधनाः स्मृताः।
यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम्॥
अन्यदीया तु या दासी न दास्यन्यस्य सा भवेत्।
न देवदास्यधिगमे शुल्कतो दासतां व्रजेत्॥
कामात्तु संश्रितां यस्तु दासीं कुर्यात् बलात् स्त्रियम्।
संक्रामयेत वाऽन्यत्र दण्ड्यस्तच्चाकृतं भवेत्॥
बालधात्रीमदासीं च दासीमिति भुनक्ति यः।
परिचारकपत्नीं वा प्राप्नुयात् पूर्वसाहसम्॥
आक्रोशमानां यो भोक्ता दासीं विक्री(क्रे)तुमिच्छति।
अनापदिस्थः शक्तः सन् प्राप्नुयाद् द्विशतं दमम्॥
नारदः—यथा गोश्वोष्ट्रदासीषु महिष्याजाविकादिषु।
नोत्पादकः प्रजाभागी तथैवान्याङ्गनास्वपि॥
ओघवाताहृतं बीजं क्षेत्रे यस्य प्ररोहति।
फलभाङ् नियतं क्षेत्री न बीजी लभते फलम्॥
क्षेत्रिकानुमते बीजं यस्य क्षेत्रे समर्प्यते।
तदपत्यं द्वयोरेव बीजिक्षेत्रिकयोर्मतः (तम्)॥

त्रिषु वर्णेषु विज्ञेयो(यं) दास्यं विप्रस्य न क्वचित् ।
वर्णानामनुलोमेन दास्यं न प्रतिलोमतः ॥
समवर्णे तु विप्रस्य दासत्वं नैव कारयेत् ।
श्रुताध्ययनसंपन्ने न न्यूनं कर्म कामतः ॥
तत्रापि नाशुभं कर्म प्रकुर्वीत द्विजोत्तमः ।
ब्राह्मणस्य हि दासत्वान्नृपतेजो विहन्यते ॥
नारदः—विष्णुर्यस्तूत्तमं कर्म वर्णदास्ये नियोजयेत् ।
स्वधर्मत्यागिनोऽन्यत्र दारवद्दासता मता ॥
तस्योत्तममाहमदण्डः ।
कण्वः—अज्ञातयोनयः सर्वे नैव दासा द्विजन्मनाम् ।
विद्याधिकः सजातिश्च सपिण्डो गुरवोऽपि च ॥
मनुः—शूद्रं तु कारयेद्दास्यं क्रीतमक्रीतमेव वा ।
दासभावे हि सृष्टोऽसौ स्वयमेव स्वयंभुवा ॥
इत्यभ्युपेत्याशुश्रूषाप्रकरणम् ॥

---

अथ वेतनानपाकर्मप्रकरणम् ।

नारदः—भृतानां वेतनस्योक्तो दानादानविधिक्रमः ।
वेतनस्यानपाकर्म तद्विवादपदं स्मृतम् ॥
भृताय वेतनं दद्यात् कर्मस्वामी यथाक्रमम् ।
आदौ मध्येऽवसाने वा कर्मणो यद्विनिश्चितम् ॥
भृतावनिश्चितायां तु दशभागमवाप्नुयुः ।
लाभगोवीर्यसस्यानां वणिग्गोपकृषीवलाः ॥
बृहस्पतिः—त्रिभागं पञ्चभागं वा गृह्णीयात् सीरवाहकः ।
भक्तादिभृतकः [सी]राद्भागं गृह्णीत पञ्चकम् ॥
जातसस्यात् त्रिभागं तु प्रगृह्णीतापरो भृतः ।
वृद्धमनुः—समुद्रयानकुशला देशकालार्थदर्शिनः ।
निश्चयेयुर्भृतिं तां तु या स्यात् प्रागकृता यदि ॥
बृहस्पतिः—गृहीतवेतनः कर्म न करोति यदा भृतः ।
समर्थश्चेद्दमं दाप्यो द्विगुणं तच्च वेतनम् ॥

नारदः—कर्माकुर्वन् प्रतिश्रुत्य कार्यो दत्त्वा भृतिं बलात्।
कालेऽपूर्णे त्यजन् कर्म भृतेर्नाशमवाप्नुयात्॥
स्वामिदोषादपक्रामन् यावत् कृतमवाप्नुयात्।
मनुः—भृतो नाऽऽर्तो न कुर्याद्यो दर्पात् कर्म यथोदितम्॥
स दण्ड्यः कृष्णलान्यष्टौ न देयं चास्य वेतनम्।
याज्ञवल्क्यः—अराजदैविकं नष्टं भाण्डं दाप्यस्तु वाहकः।
प्रस्थानविघ्नकृच्चैव प्रदाप्यो द्विगुणां भृतिम्॥
प्रक्रान्ते सप्तमं भागं चतुर्थं पथि संत्यजन्।
भृतिमर्ध्यपथे सर्वां प्रदाप्यस्त्याजकोऽपि च॥
कात्यायनः—त्यजेत् पथि सहायं यः श्रान्तं रोगार्तमेव वा।
प्राप्नुयात् साहसं पूर्वं ग्रामे त्र्यहमपालयन्॥
शुल्कं गृहीत्वा पण्यस्त्री नेच्छन्ती द्विगुणं वहेत्।
अनिच्छन् शुल्कदाताऽपि शुल्कहानिमवाप्नुयात्॥
बृहस्पतिः—व्याधिता सश्रमा व्यग्रा राजकर्मपरायणा।
आमन्त्रिता च नाऽऽगच्छेदवाच्या वडवा स्मृता॥
नारदः—अप्रयच्छंस्तथा शुल्कमनुभूय पुमान्स्त्रियम्।
अक्रमेण तु संगच्छन्खादन्दन्तनखादिभिः॥
अयोनौ यः समाक्रामेत् बहुभिर्वा विवासयेत्।
शुल्कं सोऽष्टगुणं दाप्यो विनयं तावदेव तु॥
गृहीत्वा वेतनं वेश्या लाभादन्यत्र गच्छति।
तां दमं दापयेद्द्व्यादितरस्यापि हाटकम्॥
वेश्याप्रधाना ये तत्र कामुकास्तद्गृहोषिताः।
तत्समर्थेषु कार्येषु निर्णयस्तैः प्रकीर्तितः॥
नारदः—परभूमौ गृहं कृत्वा स्तोमं दत्त्वा वसेत्तु यः।
स तद्गृहीत्वा निर्गच्छेत्तृणकाष्ठेष्टकादिकम्॥
स्तोमाद्विना वसित्वा तु परभूमावनिश्चितः।
निर्गच्छन्तृणकाष्ठादि न गृह्णीयात्कथंचन॥
यान्येव तृणकाष्ठानि त्विष्टका वा निवेशिताः।
निर्गच्छन्स तु तत्सर्वं भूमिस्वामिनि वेदयेत्॥

कात्यायनः—गृहवार्यापणादीनि गृहीत्वा हाटकेन यः ।
स्वामिनो नार्पयेद्यावत्तावद्दाप्यः स हाटकम् ॥
नारदः—स्तोमवाहीनि भाण्डानि पूर्णकालान्युपानयेत् ।
ग्रहीतुर्दापयेद्भग्नं नष्टं चान्यत्र संप्लवात् ॥
इति वेतनानपाकर्मप्रकरणम् ।

---

अथ स्वामिपालविवादप्रकरणम् ।

मनुः—पशुषु स्वामिनां चैव पालानां च व्यतिक्रमे ।
विवादं संप्रवक्ष्यामि यथावद्धर्मतत्त्वतः ॥
गवां शताद्वत्सतरी धेनुः स्याद्द्विशताद्भृतिः ।
प्रतिसंवत्सरं गोपे संदोहश्चाष्टमेऽहनि ॥
यथा धेनुभृतः क्षीरं लभते ह्यष्टमेऽखिलम् ।
उपानयेद्वा गोपालः प्रत्यहं रजनीक्षये ॥
चीर्णाः पीताश्च ता गावः सायाह्ने प्रत्युपानयेत् ।
यथार्पितान्पशून्गोपः सायं प्रत्यर्पयेत्तथा ॥
मनुः—दिवा वक्तव्यता पाले रात्रौ स्वामिनि तद्गृहे ।
योगक्षेमोऽन्यथा चेत्तु पालो वक्तव्यतामियात् ॥
याज्ञवल्क्यः—प्रमादमृतनष्टांश्च प्रदाप्यः कृतवेतनः ।
व्यासः—बालग्रहे ब्रह्मघाते तथा राष्ट्रस्य विभ्रमे ।
यत्प्रनष्टं हृतं वा स्यान्न पालस्तत्र किल्बिषी ॥
नारदः—स्याच्चेद्गोव्यसनं गोपो व्यायच्छेत्तत्र शक्तितः ।
अशक्तस्तूर्णमागत्य स्वामिने तन्निवेदयेत् ॥
अव्यायच्छन्नविक्रोशन्स्वामिने चानिवेदयन् ।
दातुमर्हति गोपस्तां विनयं चैव राजनि ॥
बृहस्पतिः—पालदोषाद्विनाशे तु पाले दण्डो विधीयते ।
अर्धत्रयोदशपणः स्वामिने द्रव्यमेव च ॥
नारदः—अजाविके तु संरुद्धे वृकैः पाले त्वनायति ।
यां प्रसह्य वृको हन्यात्पाले तत्किल्बिषं भवेत् ।

---

१ ख. लभेत ह्य° ।

नष्टं विनष्टं कृमिभिः श्वहतं विषमे मृतम् ।
हीनं पुरुषकारेण प्रदद्याद्गोप एव तत् ॥
अनेन सर्वपालानां विवादः समुदाहृतः ।
मृतेऽत्र तु विशुद्धः स्यात्पालस्तस्याङ्गदर्शनात् ।
मनुः—कर्णौ च शृङ्गबालौ च बस्तिं स्नायुं च रोचनाम् ।
पशुषु स्वामिने दद्यान्मृतेष्वङ्गानि दर्शयेत् ॥
याज्ञवल्क्यः—ग्रामेच्छया गोप्रचारो भूमी राजवशेन वा ।
धनुःशतं परीणाहो ग्रामक्षेत्रान्तरं भवेत् ॥
द्वे शते पत्तनस्य स्यान्नगरस्य चतुर्गुणम् ।
तत्रापरिवृतं धान्यं विहिंस्युः पशवो यदि ॥
न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणाम् ।
पथि ग्रामविवीतान्ते क्षेत्रे दोषो न विद्यते ॥
अकामतः कामचारी चोरवद्दण्डमर्हति ।
कात्यायनः—पथि क्षेत्रे वृतिः कार्या यामुष्ट्रो नावलेहयेत् ॥
न लङ्घयेत्पशुर्नोष्ट्रो न भिन्द्यातां श्वसूकरौ ।
नारदः—आजातेष्वेव सस्येषु कुर्यादावरणं महत् ॥
दुःखेन हि निवार्यन्ते लब्धस्वादुरसा मृगाः ।
गोभिर्विनाशितं धान्यं सामन्तैरनुमोदितम् ॥
क्षेत्रिणा गोमिना देयं धान्यं यत्नेन सिध्यते ।
कात्यायनः—यावत्सस्यं विनश्येत तावद्देयं च गोमिना ॥
माषानष्टौ तु महिषी सस्यघातस्य कारिणी ।
दण्डनीया तदर्धं तु गौस्तदर्धमजाविकम् ।
सममेषां विवीतेऽपि खरोष्ट्रं महिषीसमम् ।
नारदः—वसतां द्विगुणं दण्डं सवत्सानां चतुर्गुणम् ॥
न तत्र स्वामिनो दोषः पाले सति चतुष्पदाम् ।
अपाले स्वामिनो दोषः सस्यघाते स्मृतो बुधैः ॥
या नष्टा पालदोषेण गौस्तु सस्यानि नाशयेत् ।
न तत्र गोमिनो दण्डः पालस्तद्दण्डमर्हति ॥
अदण्ड्या हस्तिनो ह्यश्वाः प्रजापाला हि ते स्थिताः ।
अदण्ड्यौ काणकुब्जौ च वृषभः कृतलक्षणः ॥

अदण्ड्याऽऽगन्तुकी गौश्च सूतिका चातिसारिणी।
अदण्ड्याश्चोत्सवे गावः श्राद्धादिषु च कर्मसु ॥
महोक्षोत्सृष्टपशवः सूतिकागन्तुकादयः।
कात्यायनः—गवां निर्गच्छतां कामात्कश्चित्पार्श्वे प्रमादतः ॥
ग्रसेन्निर्गत्य सस्यानि न दोषः स्वामिपालयोः।
इति स्वामिपालविवादप्रकरणम्।

---

अथ समयानपाकर्मप्रकरणम्।

बृहस्पतिः—ग्रामश्रेणिगणानां च संकेतः समयक्रिया।
साधुकार्ये तु सा कार्या धर्मकार्ये तथैव च ॥
कोशेन लेख्यक्रियया मध्यस्थैर्वा परस्परम्।
विश्वासं प्रथमं कुर्युः कुर्युः कार्याण्यनन्तरम्।
बृहस्पतिः—द्वे त्रयः पञ्च वा कार्याः समूहहितवादिनः।
कर्तव्यं वचनं तेषां ग्रामश्रेणिगणादिभिः ॥
विद्वेषिणो व्यसनिनः शालीनालसभीरवः।
लुब्धातिवृद्धबालाश्च न कार्याः कार्यचिन्तकाः ॥
ऋजवो वेदधर्मज्ञा दक्षा दान्ताः कुलोद्भवाः।
सर्वकार्यप्रवीणाश्च कर्तव्याः कार्यचिन्तकाः ॥
अविरोधेन धर्मस्य निर्गतं राजशासनम्।
तस्यैवाऽऽचरणं पूर्वं कर्तव्यं तु नृपाज्ञया ॥
राज्ञा प्रवर्तितान् धर्मान् यो नरो नानुपालयेत्।
गर्ह्यः स पापो दण्ड्यश्च लोपयन् राजशासनम् ॥
याज्ञवल्क्यः—गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेच्च यः।
सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत् ॥
मतभेदमुपेक्षां वा यः कश्चित् कुरुते नरः।
चतुः सुवर्णः षण्निष्कस्तस्य दण्डो विधीयते ॥
कात्यायनः—शवकेशैर्वीज्यमानं ब्राह्मणं ह्युपशेखरम्।
दिग्वस्त्रं गमयेद्राजा दुष्टं समयलङ्घिनम् ॥
बृहस्पतिः—अरुंतुदः सूचकश्च भेदकृत् साहसी तथा।

श्रेणीपूगनृपद्विट् च क्षिपन्निर्वास्यते ततः ।
यस्तु साधारणं हिंस्यात् क्षिपेत् त्रैविद्यमेव वा ॥
साक्षिक्रियां विहन्याद्वा स निर्वास्यस्ततः पुरात् ।
एकपात्रेऽथ पङ्क्त्यां वा संभोक्ता येन यो भवेत् ॥
अकुर्वंस्तत्तदा दण्ड्यस्तस्य दोषमदर्शयन् ।
बृहस्पतिः—कुलश्रेणिगणाध्यक्षाः पुरदुर्गनिवासिनः ।
वाग्धिक्दण्डं परित्यागं प्रकुर्युः पापकारिणम् ॥
तैः कृतं यत् स्वधर्मेण निग्रहानुग्रहं नृणाम् ।
तद्राज्ञाऽप्यनुमन्तव्यं निसृष्टार्था हि ते स्मृताः ॥
बाधां कुर्युर्यदेकस्य संभूता द्वेषसंयुताः ।
राज्ञा ते विनिवार्याः स्युः शास्याश्चैवानुबन्धतः ॥
मुख्यैः सह समूहानां संविवादो यदा भवेत् ।
तदा विचारयेद्राजा स्वमार्गे स्थापयेच्च तान् ॥
याज्ञवल्क्यः—समूहकार्य आयातान् कृतकार्यान् विसर्जयेत् ।
सदा संमानसत्कारैः पूजयित्वा महीपतिः ॥
ततो लभेत यत्किंचित् सर्वेषामेव तत्समम् ।
देयं वा निःस्ववृद्धार्तस्त्रीबालातुररोगिषु ।
यत्तैः प्राप्तं रक्षितं वा गणार्थे वा ऋणं कृतम् ॥
राजप्रसादलब्धं च सर्वेषामेव तत्समम् ॥
कात्यायनः—गणमुद्दिश्य यत्किंचित् कृत्वर्णं भक्षितं भवेत् ।
आत्मार्थं विनियुक्तं वा देयं तैरेव तद्भवेत् ॥
समूहकृत्यप्रहितो यल्लभेत तदर्पयेत् ।
एकादशगुणं दाप्यो यद्यसौ नार्पयेत् स्वयम् ॥
इति समयानपाकर्मप्रकरणम् ।

---

अथ विक्रीयासंप्रदानप्रकरणम् ।

नारदः—विक्रीय पण्यं मूल्येन यः क्रेतुर्न प्रयच्छति ।
विक्रीयासंप्रदानं तद्विवादपदमुच्यते ॥
लोकेऽस्मिन् द्विविधं द्रव्यं स्थावरं जङ्गमं तथा ।
क्रयविक्रयधर्मेषु सर्वं तत् पण्यमुच्यते ॥

षड्विधस्तस्य तु बुधैर्दानादानविधिः स्मृतः।
गणिमं तूलिमं मेयं क्रियया रूपतः श्रिया॥
स्थावरस्य क्षयं दाप्यो जङ्गमस्य क्रियाफलम्।
अर्थश्चेदपहीयेत सोदयं पण्यमावहेत्॥
स्थानिनामेष नियमो दिग्लाभं दिग्विचारिणा।
याज्ञवल्क्यः—गृहीतमूल्यं यः पण्यं क्रेतुर्नैव प्रयच्छति।
सोदयं तस्य दाप्योऽसौ दिग्लाभं तु दिगागते॥
उपहन्येत वा पण्यं दह्येतापह्रियेत वा।
विक्रेतुरेव सोऽनर्थो विक्रीयासंप्रयच्छतः।
स्वदेशपण्ये तु वणिक् शतं गृह्णीत पञ्चकम्॥
पारदेश्ये तु दशकं यः सद्यः क्रयविक्रयी।
मनुः—क्रीत्वा विक्रीय वा किंचिद्यस्येहानुशयो भवेत्॥
सोऽन्तर्दशाहात्तद्द्रव्यं दद्याच्चैवाऽऽददीत च।
परेण तु दशाहस्य न दद्यान्नैव दापयेत्॥
क्रीत्वा प्राप्तं न गृह्णीयाद्यो न दद्याददूषितम्।
स मूल्याद्दशभागं तु दत्त्वा द्रव्यमवाप्नुयात्॥
नारदः—निर्दोषं दर्शयित्वा तु सदोषं यः प्रयच्छति।
मूल्यं तद्द्विगुणं दाप्यो विनयं तावदेव तु॥
बृहस्पतिः—ज्ञात्वा सदोषं यः पण्यं विक्रीणीतेऽविचक्षणः।
तदेव द्विगुणं दाप्यस्तत्समं विनयं तथा॥
याज्ञवल्क्यः—सत्यंकारकृतं द्रव्यं द्विगुणं प्रतिदापयेत्।
दीयमानं न गृह्णाति क्रीत्वा पण्यं च यः क्रयी॥
विक्रीणनात्तदन्यत्र विक्रेता नापराध्नुयात्।
विक्रीतमपि विक्रेयं पूर्वक्रेतर्यगृह्णाति॥
हानिश्चेत् क्रेतृदोषेण क्रेतुरेव हि सा भवेत्।
दैवराजोपघातेन पण्ये दोषमुपागते॥
हानिर्विक्रेतुरेव स्याद्याचितस्याप्रयच्छतः।
दत्तमूल्यस्य पण्यस्य विधिरेष प्रकीर्तितः॥
अदत्तेऽन्यत्र समयान्न विक्रेतुरतिक्रमः।
इति विक्रीयासंप्रदानप्रकरणम्।

अथ क्रीत्वानुशयप्रकरणम् ।

क्रीत्वा मूल्येन यः पण्यं क्रेता न बहु मन्यते ।
क्रीत्वाऽनुशय इत्येतद्विवादपदमुच्यते ॥
क्रीत्वा मूल्येन यः पण्यं दुष्क्रीतं मन्यते क्रयी ।
विक्रेतुः प्रतिदेयं तत्तस्मिन्नेवाह्न्यविक्षतम् ॥
द्वितीयेऽह्नि ददत् क्रेता मूल्यात् त्रिंशांशमावहेत् ।
द्विगुणं तु तृतीयेऽह्नि परतः क्रेतुरेव तत् ।

याज्ञवल्क्यः—क्षयं वृद्धिं च पण्यानां वणिजा च विधानतः ।
क्रीत्वा नानुशयः कार्यः कुर्वन् षड्भागदण्डभाक् ॥

बृहस्पतिः—परीक्षेत स्वयं पण्यमन्येषां च प्रदर्शयेत् ।
परीक्षितं बहुमतं गृहीत्वा न पुनस्त्यजेत् ॥

व्यासः—चर्मकाष्ठेष्टकासूत्रधान्यासवरसस्य च ।
वस्त्ररूप्यहिरण्यानां सद्य एव परीक्षणम् ॥
परीक्ष्याभिमतं क्रीतं विक्रेतुर्न भवेत् पुनः ।
दशैकपञ्चसप्ताहमासत्र्यहार्धमासिकम् ॥
बीजायोवाह्यरत्नस्त्रीदोह्यपुंसां परीक्षणम् ॥

बृहस्पतिः—अतोऽर्वाक्पण्यदोषस्तु यदि संजायते क्वचित् ।
विक्रेतुः प्रतिदेयं तत् क्रेता मूल्यमवाप्नुयात् ।

नारदः—नान्यदन्येन संसृष्टरूपं विक्रयमर्हति ।
न चावद्यं न च न्यूनं न दूरे न तिरोहितम् ॥

नारदः—परिभुक्तं तु यद्वासः क्लिष्टरूपं मलीमसम् ।
सदोषमपि तत्क्रीतं विक्रेतुर्न भवेत् पुनः ॥

साधारणं तु यत्क्षेत्रं नैको दद्यान्नराधमः ।
न दद्यान्न च गृह्णीयान्न विक्रीयान्न चैव हि ।
मूल्याष्टभागो हीयेत सकृद्धौतस्य वाससः ॥
द्विर्द्विपादस्त्रिस्त्रिपादश्चतुर्धौतेऽर्धमेव च ।
अर्धक्षयात्तु परतः पादांशापचयः क्रमात् ॥
यावत्क्षीणदशं जीर्णं षष्ठस्यानियमः क्षये ।
तदर्हद्रव्यपञ्चांशत्र्यंशैर्निष्क्रययोजनम् ॥

त्रिभिः सिद्धास्त्रयो दाप्यश्चतुर्थांशो न पश्चमः ।
द्रव्यं स्वं पञ्चधा कृत्वा त्रिभागो मूल्यमुच्यते ॥
लाभश्चतुर्थो भागः स्यात्पञ्चमो सह्यमुच्यते ।
बृहस्पतिः-मणीभाश्वाश्वतरीणामागमैर्मूल्यकल्पना ॥
नृपाज्ञयाऽऽपणस्थानं गोभूम्योरुभयेच्छया ।
व्यासः-आत्मीयस्य विजातीयद्रव्यमादाय चान्यतः ॥
क्रयो मूल्यस्य संत्यागः सत्त्वहेतुः परस्परम् ।
परिवृत्तिः सजातीयद्रव्ये विनिमयः समे ॥
वैषम्ये च क्रयः प्रोक्तो मिश्रे विनिमयः स्मृतः ।
अर्धाधिकेन द्रव्येण मिश्रितं परिवर्तनम् ॥
क्रय एव भवेन्न्यूनो विपरीतसमावुभौ ।
तत्र कोट्यन्तरं विद्वान्मृगरूपमनुष्यवत् ॥

इति क्रीत्वानुशयप्रकरणम् ।

-----

## अथ सीमाविवादप्रकरणम् ।

आधिक्यं न्यूनता चांशे अस्तिनास्तित्वमेव च ।
अभोगभुक्तिः सीमा च षड् भूवादस्य हेतवः ॥
कूपवापीतडागानि चैत्यारामसुरालयाः ।
स्थलनिम्ननदीस्रोतशरगुन्मा(ल्मा)दिराशयः ॥
प्रकाशचिह्नान्येतानि सीमायाः कारयेत्सदा ।
अश्मनोऽस्थीनि गोवालांस्तुषान्भस्मकपालिकाः ॥
करीषमिष्टकाङ्गारशर्करा वालुकां तथा ।
यानि चैवंप्रकाराणि कालाद्भूमिर्न भक्षयेत् ॥
तानि सर्वाणि सीमायाः प्रकाशानि च कारयेत् ।
प्रक्षिप्य कुम्भेष्वेतानि सीमान्तेषु निधापयेत् ॥
ततः पौगण्डबालानां प्रयत्नेन प्रदर्शयेत् ।
वार्धके च शिशूनां ते दर्शयेयुस्तथैव च ।
एवं परम्पराज्ञाते सीमाभ्रान्तिर्न जायते ॥
एतैर्लिङ्गैर्नयेत्सीमां राजा विवदतां नृणाम् ।
यत्र संशय एव स्याल्लिङ्गानामपि दर्शने ॥

साक्षिप्रत्यय एव स्याद्विवादे सीम्नि निश्चयः।
साक्ष्यभावे तु चत्वारो ग्रामसीमान्तवासिनः॥
सीमाविनिर्णयं कुर्युः प्रयता राजसंनिधौ।
कात्यायनः—स्वार्थसिद्धौ प्रदुष्टेषु सामन्तेष्वर्थगौरवात्।
तत्संसक्तैस्तु कर्तव्य उद्धारो नात्र संशयः॥
मनुः—शिरोभिस्ते गृहीत्वोर्वीं स्रग्विणो रक्तवाससः।
सुकृतैः शापिताः स्वैः स्वैर्नयेयुस्ते समञ्जसम्।
नारदः—नैकः समुन्नयेत्सीमां नरः प्रत्ययवानपि।
गुरुत्वादस्य कार्यस्य क्रियैषा बहुषु स्थिता॥
एको यद्विनयेत् सीमामुभयोरपि संमतः।
नारदः—सीमावादे तथा कोशे पादस्पर्शे तथैव च॥
त्रिपक्षपक्षसप्ताहाद्दैवराजकमिष्यते।
अथ चेदनृतं ब्रूयुः सामन्तास्तद्विनिर्णये।
सर्वे पृथक् पृथग् दण्ड्या राज्ञा मध्यमसाहसम्॥
याज्ञवल्क्यः—अभावे ज्ञातृचिह्नानां राजा सीम्नः प्रवर्तकः।
सद्योत्सृष्टा राजदत्ता यस्य तस्यैव सा मही॥
अन्यथा न भवेल्लोपो नराणां राजदैविके।
क्षयोदयौ जीवनं च दैवराजवशं नृणाम्॥
तस्मात् सर्वेषु कार्येषु तत्कृतं न विचालयेत्।
क्षेत्रं ससस्यमुल्लङ्घ्य भूमिश्छिन्ना यदा भवेत्॥
नदीस्रोतःप्रवाहेण पूर्वस्वामी लभेत ताम्।
आरामायतनग्रामनिपानोद्यानवेश्मसु।
एष एव विधिर्ज्ञेयो वर्षाम्बुप्रवहादिषु॥
व्यासः—या राज्ञा क्रोधलोभेन च्छलान्यायेन वा हृता।
प्रदत्ताऽन्यस्य तुष्टेन न सा सिद्धिमवाप्नुयात्॥
नारदः—परक्षेत्रस्य मध्ये तु सेतुर्न प्रतिषिध्यते।
महागुणोऽल्पबाधस्तु वृद्धिरिष्टाऽक्षये सति॥
परभूमिं हरन् कूपः स्वल्पक्षेत्रो बहूदकः।
स्वामिने योऽनिवेद्यैव क्षेत्रे सेतुं प्रकल्पयेत्॥
उत्पन्ने स्वामिनो भोगस्तदभावे महीपतेः॥

सेतुस्तु द्विविधः प्रोक्तः खेयो बन्ध्यस्तथैव च।
तोयप्रवर्तनात् खेयो बन्ध्यः स्यात्तन्निवर्तनात्॥
मृते तु स्वामिनि पुनः तद्वंश्ये वाऽपि मानवे।
राजानमामन्त्र्य ततः कुर्यात् सेतुप्रवर्तनम्॥
कात्यायनः—अस्वाम्यनुमतेनैव संस्कारं कुरुते तु यः।
गृहोद्यानतटागानां संस्कर्ता लभते न तु॥
दिवं स्वामिनि चाऽऽयाते न निवेद्य नृपे यदि।
अथाऽऽवेद्य प्रयुक्तस्तु तद्गतं लभते व्ययम्॥
नारदः—अशक्तप्रेतनष्टेषु क्षेत्रिकेष्वनिवारितः।
क्षेत्रं चेद्विकृषेत् कश्चिदश्नुवीत स तत्फलम्॥
विकृष्यमाणे क्षेत्रे चेत् क्षेत्रिकः पुनराव्रजेत्।
खिलोपचारं तत्सर्वं दत्त्वा स्वं क्षेत्रमाप्नुयात्॥
कात्यायनः—अशक्तितो न दद्याच्चेत् खिलार्थे यः कृतो व्ययः।
तदष्टभागहीनं तु क्षेत्रिकः फलमाप्नुयात्॥
संवत्सरेणार्धखिलं खिलं स्याद्वत्सरैस्त्रिभिः।
पञ्चवर्षावसन्नं तु क्षेत्रं स्यादटवीसमम्॥
क्षेत्रं गृहीत्वा यः कश्चिन्न कुर्यात् न च कारयेत्।
स्वामिने स शदं दाप्यो राज्ञे दण्डं च तत्समम्॥
मनुः—चिरावसन्ने दशमं कृष्यमाणे तथाऽष्टमम्।
सुसंस्कृते तु षष्ठं स्यात् परिकल्प्यं यथास्थिति॥
विष्णुः—ग्रामद्वयमर्यादाभेदे द्विशतम्। क्षेत्रमर्यादाभेदेऽष्टशतम्। सीमातिक्रमणेऽष्टसहस्रम्। क्षेत्रात् क्षेत्रोदकाहरणे तदुपरोधेनाष्टशतं दण्ड्यः।
शङ्खः—सीमाभेत्तारमुत्तमसाहसं दण्डयित्वा पुनः सीमां कारयेत्।
कात्यायनः—सीमामध्ये तु जातानां वृक्षाणां क्षेत्रयोर्द्वयोः।
पुष्पं फलं च सामान्यात्क्षेत्रस्वामिषु निर्दिशेत्॥
अन्यक्षेत्रे तु जातानामग्रशाखाः परत्र चेत्।
स एव तासां स्वामी स्याद्यत्क्षेत्रोपरि ताः स्थिताः॥
बीजिने तु तृतीयांशं दद्याद्वृक्षात्तु ते शदम्।
द्वावंशौ क्षेत्रिणः स्यातां स्वामिभागः प्रशस्यते॥

यदि तेनोपरोधः स्यात्शाखिनाऽन्यप्ररोहिणा ।
कदलीक्रमुकादीनां तत्र स्वाम्येव भोगभाक् ॥
परक्षेत्रे समुत्पन्नं ह्यन्यक्षेत्रे फलं ददत् ।
शाखाः छेद्यास्तु तत्रस्थाः फलं वा विभजेत्ततः ॥

इति सीमाविवादप्रकरणम् ।

---

अथ वाक्पारुष्यप्रकरणम् ।

नारदः—देशजातिकुलादीनामाक्रोश( शाद्य )ङ्गसंयुतम् ।
यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते ॥
कात्यायनः—हुंकारं शासनं चैव लोके यच्च विगर्हितम् ।
अनुकुर्यादथ ब्रूयाद्वाक्पारुष्यं तदुच्यते ॥
भगिनीमातृसंबन्धमुपपातकशंसनम् ।
पारुष्यं मध्यमं प्रोक्तं वाचिकं शास्त्रवेदिभिः ।
अभक्ष्यपेयकथनं महापातकदूषणम् ।
पारुष्यमुत्तमं प्रोक्तं तीव्रं मर्मातिघट्टनम् ।
बृहस्पतिः—समानयोः समो दण्डो न्यूनस्य द्विगुणस्तु यः ।
उत्तमस्यार्धकः प्रोक्तो वाक्पारुष्ये परस्परम् ॥
याज्ञवल्क्यः—अर्धोऽधमेषु द्विगुणं परस्त्रीषूत्तमेषु च ।
दण्डप्रणयनं कार्यं वर्णजात्युत्तराधरैः ॥
नारदः—मदात्प्रमादात्संजल्पात्प्रीत्यैवोक्तं मयेति यः ।
भूयो न चैवं वक्ष्यामीत्येवं सोऽप्यर्धदण्डभाक् ॥
बृहस्पतिः—समजातिगुणानां तु वाक्पारुष्ये परस्परम् ।
विनयोऽभिहितः शास्त्रे पणानर्धत्रयोदशान् ॥
मनुनारदौ—काणं वाऽप्यथवा खञ्जमन्यं वाऽपि तथाविधम् ।
तथ्येनापि ब्रुवन्दाप्यो दण्डं कार्षापणद्वयम् ॥
याज्ञवल्क्यः—अभिगन्ताऽस्मि भगिनीं मातरं वा तवेति च ।
शपन्तं दापयेद्राजा पञ्चविंशतिकं दमम् ॥
बाहुग्रीवानेत्रसक्थिविनाशे वाचिके दमः ।
शत्यस्तदर्धिकः पादनासाकर्णकरादिषु ॥

अशक्तस्तु वदन्नेवं दण्डनीयः पणान्दश ।
तथा शक्तः प्रतिभुवं दाप्यः क्षेमाय तस्य तु ॥
मातरं पितरं जायां भ्रातरं श्वशुरं गुरुम् ।
आक्षारयञ्शतं दाप्यः पन्थानं चाददद्गुरोः ॥
क्षिपन्स्वस्रादिकं दद्यात्पञ्चाशत्पणकं दमम् ।
मनुः—शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति ॥
वैश्योऽप्यर्धशतं चैव शूद्रस्तु वधमर्हति ।
पञ्चाशद्ब्राह्मणो दण्ड्यः क्षत्रियस्याभिशंसने ।
वैश्ये स्यादर्धपञ्चाशच्छूद्रे द्वादशको दमः ।
बृहस्पतिः—सच्छूद्रस्यायमुदितो विनयो नापराधिनः ॥
गुणहीनस्य पारुष्ये ब्राह्मणो नापराध्नुयात् ।
वैश्यस्तु क्षत्रियाक्रोशे दण्डनीयः शतं भवेत् ।
तदर्धं क्षत्रियो वैश्यं क्षिपन् विनयमर्हति ॥
शूद्राक्रोशे क्षत्रियस्य पञ्चविंशतिको दमः ।
वैश्यस्य चैतद्द्विगुणं शास्त्रविद्भिरुदाहृतः ॥
वैश्यमाक्षारयन् शूद्रो दाप्यः स्यात् प्रथमं दमः ।
क्षत्रियं मध्यमं चैव विप्रमुत्तमसाहसम् ॥
मनुनारदौ--एकजातिर्द्विजातिं तु वाचा दारुणया वदन् ।
जिह्वायाः प्राप्नुयाच्छेदं जघन्यप्रभवो हि सः ॥
नामजातिग्रहं चैषामभिद्रोहेण कुर्वताम् ।
निक्षेयोऽय(यो)मयः शङ्कुर्ज्वलन्नास्ये दशाङ्गुलः ॥
धर्मोपदेशं दर्पेण द्विजानामस्य कुर्वतः ।
तप्तमासेचयेत्तैलं वक्त्रे श्रोत्रे च पार्थिवः ॥
यमः--वेदध्वनिं च शूद्रस्य शृण्वतः शासनं शृणु ।
त्रपुणा जतुसीसाभ्यां श्रोत्रे संतप्य पूरयेत् ।
खण्डशश्छेदयेज्जिह्वामृचं वै यद्युदाहरेत् ॥
न किल्बिषेणापवदेच्छास्त्रतः कृतपावनम् ।
न राज्ञा कृतदण्डं च दण्डभाक् तु व्यतिक्रमात् ॥
व्यासः—पापोपपापवक्तारो महापातकशंसकाः ।
आद्यमध्योत्तमान् दण्डान् दद्युस्ते ते यथाक्रमम् ॥

याज्ञवल्क्यः—त्रैविद्यनृपदेवानां क्षेप उत्तमसाहसम्।
मध्यमो जातिपूगानां प्रथमो ग्रामदेशयोः॥
नारदः—अवमत्य च राजानं वर्त्मनि स्वे व्यवस्थितम्।
जिह्वाछेदाद् भवेच्छुद्धिः सर्वस्वहरणेन वा॥
लोकेऽस्मिन् द्वाववक्तव्यावदण्ड्यौ च प्रकीर्तितौ।
ब्राह्मणश्चैव राजा च तौ हीदं बिभ्रतो जगत्॥
वसिष्ठः—पतितं पतितेत्युक्त्वा चोरं चोरेति वा पुनः।
वचनात्तुल्यदोषः स्यान्मिथ्या द्विर्दोषभाग्भवेत्॥
उशनाः—यत्र नोक्तो दमः सर्वैरानन्त्याच्च महर्षिभिः।
तत्र कार्यं परिज्ञाय कर्तव्यं दण्डधारणम्॥
इति वाक्पारुष्यप्रकरणम्।

---

अथ दण्डपारुष्यप्रकरणम्।

बृहस्पतिः--हस्तपाषाणलगुडैर्भस्मकर्दमपांसुभिः।
आयुधैश्च प्रहरणं दण्डपारुष्यमुच्यते॥
तस्यापि दृष्टं त्रैविध्यं हीनमध्योत्तमक्रमात्।
अवगोरणानिःसङ्गपातनक्षतदर्शनैः॥
हीनमध्योत्तमानां तु द्रव्याणां समतिक्रमे।
त्रीण्येव साहसान्याहुस्तत्र कण्टकशोधनम्॥
याज्ञवल्क्यः--भस्मपङ्करजःस्पर्शे दण्डो दशपणः स्मृतः।
अमेध्यपार्ष्णिनिष्ठ्यूतस्पर्शने द्विगुणः स्मृतः॥
समेष्वेवं परस्त्रीषु द्विगुणस्तूत्तमेषु च।
हीनेष्वर्धदमो मोहमदादिभिरदण्डनम्॥
कात्यायनः--छर्दिमूत्रपुरीषाद्यैरापाद्या( द्यो ) यश्चतुर्गुणः।
षड्गुणः कायमध्ये तु मूर्ध्नि त्वष्टगुणो भवेत्॥
उद्गोरणे तु हस्तस्य कार्यो द्वादशको दमः।
स एव द्विगुणः प्रोक्तः पातने तु सजातिषु॥
बृहस्पतिः—इष्टकोपलकाष्ठैस्तु ताडने तु द्विमाषकः।
द्विगुणः शोणितोद्भेदे दण्डः कार्यो मनीषिभिः॥

शोणितेन विना दुःखं कुर्वन् काष्ठादिभिर्नरः ।
द्वात्रिंशतं पणान् दण्ड्यो द्विगुणं दर्शनेऽसृजः ॥
मनुः—त्वग्भेदकः शतं दण्ड्यो लोहितस्य च दर्शकः ।
मांसभेत्ता तु षण्निष्कान् प्रवास्यस्त्वस्थिभेदकः ॥
बृहस्पतिः—त्वग्भेदे प्रथमे दण्डो मांसभेदे तु मध्यमः ।
उत्तमस्त्वस्थिभेदे तु घातने च प्रमापणम् ।
कात्यायनः—कर्णोष्ठघ्राणपादाक्षिजिह्वाशिश्नकरस्य च ।
छेदने तूत्तमो दण्डो भेदने मध्यमः स्मृतः ॥
मनुः—मनुष्याणां पशूनां च दुःखाय प्रहृते यदि ।
यथा यथा महादुःखं दण्डं कुर्यात्तथा तथा ॥
नारदः—येनाङ्गेनापरो वर्णो ब्राह्मणस्यापराध्नुयात् ।
तदेव तस्य च्छेत्तव्यमेवं शुद्धिमवाप्नुयात् ॥
ब्राह्मणं हन्ति चेच्छूद्रो ज्ञानतोऽज्ञानतोऽपि वा ।
महिषीपादयोर्बद्ध्वा विकर्षेताऽऽनिपातनात् ॥
राजनि प्रहरेद्यस्तु कृतागस्यपि दुर्मतिः ।
मूढं तमग्नौ विपचेद् ब्रह्महत्या[शवा]धिकम् ॥
यमः—येन केनचिदङ्गेन हिंस्याच्छ्रेयांसमन्त्यजः ।
छेत्तव्यं तत्तदेवास्य तन्मनोरनुशासनम् ॥
सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टजः ।
कट्यां कृताङ्को निर्वास्यः स्फिचं वाऽस्य निकृन्तयेत् ।
अवनिष्ठीवतो दर्पाद्द्वावोष्ठौ छेदयेन्नृपः ॥
अवमूत्रयतो मेढ्रमवशर्धयतो गुदम् ।
केशे तु गृह्णतो हस्तौ छेदयेच्चाविचारयन् ।
पादयोर्नासिकायां च ग्रीवायां वृषणे तथा ॥
अङ्गावपीडने चैव भेदने छेदने तथा ।
समुत्थानव्ययं दाप्यः कलहापहृतं च यत् ॥
मनुः—भार्या पुत्रश्च दासश्च शिष्यो भ्राता सहोदरः ।
प्राप्तापराधो दण्ड्यः स्याद्रज्ज्वा वेणुदलेन वा ॥
पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथंचन ।
अतोऽन्यथा तु प्रहरन् प्राप्तः स्याच्चोरकिल्बिषम् ॥

नारदः—पुत्रापराधे न पिता न श्ववान् शुनि दण्डभाक्।
न मर्कटे तु तत्स्वामी तैरेव प्रहितो न चेत्॥
याज्ञवल्क्यः—शक्तो ह्यमोक्षयन् स्वामी दंष्ट्रिणां शृङ्गिणां तथा।
प्रथमं साहसं दद्याद्विक्रुष्टे द्विगुणं तथा॥
बृहस्पतिः—विविक्ते ताडितो यस्तु हतो दृश्येत वा भवेत्।
हन्ता तदनुमानेन विज्ञेयः शपथेन वा॥
द्वयोः प्रहरतोर्दण्डः समयेऽस्तु समः स्मृतः।
आरम्भतोऽनुबन्धी च दाप्यः स्यादधिकं दमम्॥
आक्रुष्टस्तु समाक्रोशंस्ताडितः प्रतिताडयन्।
हत्वाऽऽततायिनं चैव नापराधी भवेन्नरः॥
कात्यायनः—अस्पृश्यधूर्तदासानां नराणां पापकारिणाम्।
प्रातिलोम्यप्रसूतानां ताडनं नार्थतो दमः॥
याज्ञवल्क्यः—दुःखे च शोणितोत्पादे शाखाङ्गच्छेदने तथा।
दण्डः क्षुद्रपशूनां तु द्विपणप्रभृतिक्रमः॥
लिङ्गस्य च्छेदने मृत्यौ मध्यमो मूल्यमेव च।
महापशूनामेतेषु स्थानेषु द्विगुणो दमः॥
कात्यायनः—त्रिपणो द्वादशपणो वधे तु मृगपक्षिणाम्।
सर्पमार्जारनकुलश्वसूकरवधे नृणाम्॥
मनुः—गोकुमारीं देवपशुमुक्षाणं वृषभं तथा।
वाहयन् साहसं पूर्वं प्राप्नुयादुत्तमं वधे॥
विष्णुः—गजाश्वोष्ट्रगोघाती ह्येककरपादिकः।
कार्यो विमांसविक्रयी च ग्राम्यपशुघाती॥
कार्षापणशतं दण्ड्यः पशुस्वामिनश्च मूल्यं दद्यात्।
परस्य पशुघाती कीटोपघाती कार्षापणम्॥
मनुः—मनुष्यमारणे क्षिप्रं चोरवत् किल्बिषं भवेत्।
प्राणभृत्सु महत्स्वर्धं गोहयोष्ट्रगजादिषु॥
कात्यायनः—प्रमापणे प्राणभृतां प्रतिरूपं तु दापयेत्।
तस्यानुरूपं मूल्यं वा दाप्य इत्यब्रवीन्मनुः॥
याज्ञवल्क्यः—प्ररोहिशाखिनां शाखास्कन्धसर्वविदारणे।
उपजीव्यद्रुमाणां तु विंशतेर्द्विगुणो दमः॥

वनस्पतीनां सर्वेषामुपभोगो यथा यथा ।
तथा तथा दमः कार्यो हिंसायामिति धारणा ॥
चैत्यश्मशानसीमासु पुण्यस्थाने सुरालये ।
जातद्रुमाणां द्विगुणो दमो वृक्षेऽथ विश्रुते ॥
कात्यायनः—वाक्पारुष्ये यथैवोक्ताः प्रतिलोमानुलोमतः ।
तथैव दण्डपारुष्ये पात्या दण्डा यथाक्रमम् ॥
इति दण्डपारुष्यप्रकरणम् ॥

---

अथ स्तेयप्रकरणम् ।

मनुः—साहसं स्यादन्वयवत् प्रसभं कर्म यत् कृतम् ।
निरन्वयं भवेत् स्तेयं कृत्वाऽपव्ययते च यत् ॥
नारदः—तदपि त्रिविधं प्रोक्तं द्रव्यापेक्षं महर्षिभिः ।
क्षुद्रमध्योत्तमानां तु द्रव्याणामपकर्षणात् ॥
मृद्भाण्डासनखट्वास्थिदारुचर्मतृणादि यत् ॥
शमीधान्यं कृतान्नं च क्षुद्रद्रव्यमुदाहृतम् ।
व्यासः—कौशेयवर्जं वसनं गोवर्जं पशवस्तथा ।
हिरण्यवर्जं लोहं च मध्यं व्रीहियवा अपि ॥
हिरण्यरत्नकौशेयस्त्रीपुंगोगजवाजिनः ।
देवब्राह्मणराज्ञां च द्रव्यं विज्ञेयमुत्तमम् ।
प्रकाशाश्चाप्रकाशाश्च तस्करा द्विविधा मताः ॥
स्वाचिह्नैरेव विज्ञेयाश्चारैस्तस्करवेदिभिः ।
नारदः—प्रकाशवञ्चकास्तत्र कूटमानतुलाश्रिताः ॥
उत्कोचकाः सोपधिकाः कितवाः पण्ययोषितः ।
प्रतिरूपकराश्चैव मङ्गलादेशवृत्तयः ।
इत्येवमादयो ज्ञेयाः प्रकाशास्तस्करा भुवि ॥
अप्रकाशास्तु विज्ञेया बहिरभ्यन्तराश्रिताः ।
सुप्तमत्तप्रमत्तांश्च मुष्णन्त्याक्रम्य ये नराः ॥
संधिच्छिदः पान्थमुषो द्विचतुष्पदहारिणः ।
उत्क्षेपकाः सस्यहरा ज्ञेयाः प्रच्छन्नतस्कराः ।

व्यासः—उत्क्षेपकः संधिभेत्ता पान्थमुड्ग्रन्थिभेदकः।
स्त्रीपुंगोश्वपशुस्तेयी चोरो नवविधः स्मृतः॥
मनुः—तान्विदित्वा सुचरितैर्गूढैस्तत्कर्मकारिभिः।
चारैश्चानेकसंस्थानैः प्रोत्साह्य वशमानयेत्॥
तेषां दोषानभिख्याप्य स्वे स्वे कर्मणि तत्त्वतः।
कुर्वीत शासनं राजा सम्यक्सारापराधतः॥
परमं यत्नमातिष्ठेत्स्तेनानां निग्रहे नृपः।
स्तेनानां निग्रहादस्य यशो राष्ट्रं च वर्धते॥
अशासंस्तस्करान्यस्तु बलिं गृह्णाति पार्थिवः।
तस्य प्रक्षुभ्यते राज्यं स्वर्गाच्च परिहीयते॥
व्यासः—तुलामानविशेषेण लेख्येन गणनेन च।
अर्घस्य वृद्धिह्रासेन मुष्णन्ति, वणिजो नरान्॥
तुलाशासनमानानां कूटकृन्नाणकस्य च।
एभिश्च व्यवहर्ता च स दाप्यो दममुत्तमम्॥
याज्ञवल्क्यः—भेषजस्नेहलवणगन्धधान्यगुडादिषु।
पण्येषु प्रक्षिपन्हीनं पणान्दाप्यस्तु षोडश॥
मिथ्या वदन्परीमाणं शुल्कस्थानादपक्रमन्।
दाप्यस्त्वष्टगुणं यश्च सव्याजक्रयविक्रयी॥
अर्घप्रक्षेपणाद्विंशं भागं शुल्कं नृपो हरेत्।
व्यासिद्धं राजयोग्यं च विक्रीतं राजगामि तत्।
बृहस्पतिः—अज्ञातौषधमन्त्रस्तु यस्तु व्याधेरतत्त्ववित्।
रोगिभ्यो द्रव्यमादत्ते स दण्ड्यश्चोरवद्भिषक्॥
चिकित्सकानां सर्वेषां मिथ्याप्रचरतां दमः।
अमानुषेषु प्रथमो मानुषेषु तु मध्यमः॥
याज्ञवल्क्यः—कूटस्वर्णव्यवहारी विमांसस्य च विक्रयी।
अङ्गहीनस्तु कर्तव्यो दाप्यश्चोत्तमसाहसम्॥
वसानास्त्रिपणान्दण्ड्यो रजकस्तु परांशुकम्।
विक्रयावक्रयाधानयाचितेषु पणान्दश॥

मृच्चर्ममणिसूत्रायःकाष्ठवल्कलवाससाम्।
अजातौ जातिकरणे विक्रयेऽष्टगुणो दमः॥
बृहस्पतिः—अल्पमूल्यं तु संस्कृत्य नयन्ति बहुमूल्यताम्।
स्त्रीबालकान्वञ्चयन्ति दण्ड्यास्तेऽर्थानुसारतः॥
मनुः—सर्वकण्टकपापिष्ठं हेमकारं तु पार्थिवः।
प्रवर्तमानमन्याय्ये छेदयेल्लवशः क्षुरैः॥
नारदः—लोहानामपि सर्वेषां हेतुरग्निः क्रियाविधौ।
क्षयः संक्रीयमाणानां तेषां दृष्टोऽग्निसंगमात्॥
याज्ञवल्क्यः—अग्नौ सुवर्णमक्षीणं रजते द्विपलं शतम्।
अष्टौ तु त्रपुसीसेषु ताम्रे पञ्चदशायसि॥
मनुः—तन्तुवायो दशपलं दद्यादेकपलाधिकम्।
अतोऽन्यथावर्तमानो दण्ड्यो द्वादशकं पणम्॥
याज्ञवल्क्यः—शते दशपला वृद्धिरौर्णे कार्पासिके तथा।
मध्ये पञ्चपला सूत्रे सूक्ष्मे तु त्रिपला मता।
त्रिंशांशो रोमबद्धस्य क्षयश्चर्मकृतस्य च॥
कौशेयवल्कलादीनां नैव वृद्धिर्न च क्षयः॥
विश्वामित्रः—षाण्मासिकमथो वास उत्तरं चाऽऽब्दिकं भवेत्।
द्विवर्षं तु प्रावरणं यथाभोगं पयो गवाम्।
देशं कालं च भोगं च ज्ञात्वा नष्टे बलाबलम्॥
द्रव्याणां कुशला ब्रूयुर्यत्तद्दाप्यमसंशयम्।
मनुः—संधिं भित्त्वा तु ये चौर्यं रात्रौ कुर्वन्ति तस्कराः।
तेषां छित्त्वा नृपो हस्तौ तीक्ष्णशूले निपातयेत्॥
पुरुषाणां कुलीनानां नारीणां च विशेषतः।
मुख्यानां चैव रत्नानां हरणे वधमर्हति॥
स्त्रीहर्ता लोहशयने दग्धव्यो वै कटाग्निना।
नरहर्ता हस्तपादौ छित्त्वा स्थाप्यश्चतुष्पथे॥
पान्थमुट् कण्ठदेशे तु बद्ध्वा वृक्षेऽवलम्बयेत्।
स्वदेशघातिनो ये स्युस्तथा मार्गनिरोधिनः॥
तेषां सर्वस्वमादाय राजा शूले निवेशयेत्।
नारदः—राज्ञः कोशापहर्तॄंश्च प्रातिकूल्येषु पण्डितान्।

अरीणामुपजप्तॄंश्च घातयेद्विविधैर्वधैः ॥
बृहस्पतिः—गोहर्तुर्नासिकां छित्त्वा बद्ध्वा चाम्भसि मज्जयेत् ।
याज्ञवल्क्यः—बन्दिग्राहांस्तथा वाजिकुञ्जराणां च हारिणः ।
प्रसह्य घातिनश्चैव शूलमारोपयेन्नरान् ॥
उत्क्षेपकग्रन्थिभेदौ करसंदंशहीनकौ ।
कार्यौ द्वितीयेऽपराधे करपादैकहीनकौ ॥
अङ्गुलीर्ग्रन्थिभेदस्य च्छेदयेत्प्रथमे ग्रहे ।
द्वितीये हस्तचरणौ तृतीये वधमर्हति ॥
बृहस्पतिः—धान्यं दशभ्यः कुम्भेभ्यो हरणेऽभ्याधिकं वधः ।
शेषेष्वेकादशगुणं दाप्यस्तस्य च तद्धनम् ॥
तुलाधरिममेयानां शतादभ्यधिके वधः ।
सुवर्णरजतादीनामुत्तमानां च वाससाम् ॥
पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते ।
शेषेऽप्येकादशगुणं मूल्याद्दण्डं प्रकल्पयेत् ॥
यमः—परिपूतेषु धान्येषु शाकमूलफलेषु च ।
निरन्वये शतं दण्ड्यः सान्वयेऽर्धशतं दमः ।
व्यासः—अल्पधान्यापहरणे क्षीरे तद्विकृतौ तथा ।
स्वामिने तत्समं दाप्यो दण्डं तु द्विगुणं नरः ॥
यस्तु रज्जुं घटं कूपाद्धरेत् भिन्द्याच्च यः प्रपाम् ।
स दण्डं प्राप्नुयान्माषं तच्च तस्मिन् समाहरेत् ॥
याज्ञवल्क्यः—क्षुद्रमध्यमहाद्रव्यहरणे सारतो दमः ।
देशकालौ वयःशक्ती संचिन्त्या दण्डकर्मणि ॥
कात्यायनः—येन येन परद्रोहं करोत्यङ्गेन तस्करः ।
छिन्द्यात्तत्तन्नृपस्तस्य न करोति तथा पुनः ।
बृहस्पतिः—वृत्तस्वाध्यायवांस्तेयी बन्धनैः क्लिश्यते चिरम् ।
स्वामिने तद्धनं दाप्यः प्रायश्चित्तं च कार्यते ।
चोरं प्रदाप्यापहृतं घातयेद्विविधैर्वधैः ॥
सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेत् ।
मनुः—न होढेन विना चोरं घातयेद्धार्मिको नृपः ॥

सहोढं सोपकरणं घातयेदविचारयन् ।

नारदः—गवादिषु प्रनष्टेषु द्रव्येष्वपहृतेषु च ।
पदेनान्वेषणं कुर्युस्तन्मूलात्तद्विदो जनाः ॥

मनुः—सभा प्रपा पूगशाला वेदी मद्यान्नविक्रयः ।
चतुष्पथाश्चैत्यवृक्षाः समाजप्रेक्षणानि च ॥
जीर्णोद्यानान्यरण्यानि कारुकावेशनान्यपि ।
एवंविधान्नृपो देशाद् गुल्मैः स्थावरजङ्गमैः ॥
तस्करप्रतिषेधार्थं चारैश्चाप्यनुचारयेत् ।
वर्णस्वराकारभेदात् संदिग्धविनिवेदनात् ॥
अदेशकालदृष्टत्वान्निवेशस्यापि शोधनात् ।
द्यूतस्त्रीपानसक्त्या च निरायव्ययकर्मभिः ॥
एतैरप्यवगन्तव्या न होढैरेव केवलम् ।
असत्याः सत्यसंकाशाः सत्याश्चासत्यसंनिभाः ॥
दृश्यन्ते विविधा भावास्तस्माद्युक्तं परीक्षणम् ।

नारदः—एतैरुपायैरन्यैश्च युक्तो नित्यमतन्द्रितः ।
स्तेनान् राजा निगृह्णीयात् स्वे राष्ट्रे पर एव च ॥
ग्रामेष्वपि च ये केचिच्चोराणां भक्तदायकाः ।
भाण्डावकाशदाश्चैव सर्वांस्तानपघातयेत् ॥

व्यासः—ये चास्य भाण्डाग्न्युदकमन्त्रोपकरणप्रदाः ।
भक्तावकाशदाश्चैव तेऽपि तद्दोषिणः स्मृताः ॥
क्रेतारश्चैव भाण्डानां प्रतिग्राहिण एव च ।
समदण्डाः स्मृताः सर्वे ये च प्रच्छादयन्ति ते ॥

नारदः—उत्क्रोशतां जनानां तु ह्रियमाणे तदा धने ।
श्रुत्वा ये नाभिधावन्ति तेऽपि तद्दोषभागिनः ॥

गौतमः—चोरसमः सचिवो मतिपूर्वं प्रतिगृहीताऽपि ।

कात्यायनः—येन दोषेण शूद्रस्य दण्डो भवति धर्मतः ।
तेन विट्क्षत्रविप्राणां द्विगुणो द्विगुणो भवेत् ।

मनुः—अष्टापाद्यं हि शूद्रस्य स्तेये भवति किल्बिषम् ॥

---

१ ख. °न्द्रिकः ।

षोडशैव तु वैश्यस्य द्वात्रिंशत् क्षत्रियस्य तु ।
ब्राह्मणस्य चतुःषष्टिः पूर्णं वाऽपि शतं भवेत् ॥
द्विगुणा वा चतुःषष्टिस्तद्दोषगुणविद्धि सः ।

आपस्तम्बः—ग्रामेषु नगरेष्वपि चाऽऽर्याञ्छुचीन् सत्यशीलान्
प्राप्तान्निदध्यात् तेषां पुरुषास्तथाविधा एव स्युः ।
सर्वतो योजनं नगरतस्तस्करेभ्यो रक्ष्यं क्रोशो ग्रामेभ्यः ॥
तत्र यन्मुष्यते तैस्तत् प्रदाप्यम् ।

कात्यायनः—स्वदेशे यस्य यत्किंचिद्धृतं देयं नृपेण तत् ।
गृह्णीयात्तत् स्वयं नष्टं प्राप्तमन्विष्य पार्थिवः ॥
अरक्षितारं राजानं बलिषड्भागहारिणम् ।
तमाहुः सर्वलोकस्य समग्रमलहारिणम् ॥
स्तेनेष्वलभ्यमानेषु राजा दद्यात् स्वतो धनात् ।
उपेक्षमाणो ह्येनस्वी धर्मादर्थाच्च हीयते ॥

याज्ञवल्क्यः—शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम् ।
अर्वाक् संवत्सरात्स्वामी परतो नृपतिर्हरेत् ॥
आददीताथ षड्भागं प्रनष्टाधिगतान्नृपः ।
दशमं द्वादशं वाऽपि सतां धर्ममनुस्मरन् ॥
प्रनष्टस्वामिकं रिक्थं राजा त्र्यब्दं निधापयेत् ।
अर्वाक् त्र्यब्दाद्धरेत् स्वामी परतो नृपतिर्हरेत् ॥
प्रनष्टाधिगतं देयं नृपेण धनिने धनम् ।
विभावयन्न चेल्लिङ्गैस्तत्समं दण्डमर्हति ।
यांस्तत्र चोरान् गृह्णीयात्तान् राजेभेन घातयत् ।

मनुः—द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके ।
आददानः परक्षेत्रान्न दण्डान् दातुमर्हति ॥

यमः—पुष्पे शाकोदके काष्ठे तथा मूले तृणेषु च ।
अदत्तादानमेतेषामस्तेयं तु यमोऽब्रवीत् ॥

याज्ञवल्क्यः—द्विजस्तृणैधःपुष्पाणि सर्वतः स्वपदा हरेत् ।

कात्यायनः—त्रपुसे द्वे कते द्वे तु पञ्चाम्रं पञ्चदाडिमम् ।
खर्जूरं बकुलादीनि गृह्णन् मुष्णन् न दोषभाक् ॥

तथैव सप्तमे भक्ते भक्तानि षडनश्नता ।
अश्वस्तनविधानेन हर्तव्यं हीनकर्मणः ॥
खलात् क्षेत्रादगाराद्वा यतो वाऽप्युपलभ्यते ।
आख्यातव्यं तु तत्सर्वं पृच्छते यदि पृच्छति ॥
मनुः–यज्ञश्चेत् प्रतिरुद्धः स्यात् पशुनैकेन यज्वनः ।
ब्राह्मणस्य विशेषेण धार्मिके सति राजनि ॥
यो वैश्यः स्याद् बहुपशुर्हीनक्रतुरसोमपः ।
कुडु(टु)म्बात्तस्य तद् द्रव्यमाहरेद्यज्ञसिद्धये ॥
आहरेत् त्रीणि वा द्वे वा कामं शूद्रस्य वेश्मनः ।
नहि शूद्रस्य वित्तेषु कश्चिदस्ति परिग्रहः ॥
यो नाऽऽहिताग्निः शतगुर्न यज्वा च सहस्रगुः ।
तयोरपि कुटुम्बाभ्यामाहरेदविचारयन् ॥
ब्राह्मणस्वं न हर्तव्यं क्षत्रियेण कदाचन ।
दस्युनिष्क्रिययोस्तु स्वमजीवन् हर्तुमिच्छति ॥
न तस्मिन् धारयेद्दण्डं धार्मिकः पृथवीपतिः ।
क्षत्त्रियस्य तु बालिश्याद् ब्राह्मणः सीदति क्षुधा ॥
कल्पयित्वाऽस्य वृत्तिं च रक्षेदेनं समन्ततः ।
राजा हि धर्मषड्भागं तस्मादाप्नोति रक्षितः ॥
अनेन विधिना राजा कुर्वाणः स्तेननिग्रहम् ।
यशोऽस्मिन् प्राप्नुयाल्लोके प्रेत्य चानुत्तमं सुखम् ॥

इति स्तेयप्रकरणम् ।

---

अथ साहसप्रकरणम् ।

मनुष्यमारणं चौर्यं परदाराभिमर्शनम् ।
पारुष्यमुभयं चेति साहसं पञ्चधा स्मृतम् ॥
सहसा क्रियते कर्म यत्किंचिद् बलदर्पितैः ।
तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते ॥
तत्पुनस्त्रिविधं ज्ञेयं प्रथमं मध्यमं तथा ।
उत्तमं चेति शास्त्रज्ञैस्तस्योक्तं लक्षणं पृथक् ॥

फलमूलोदकादीनां क्षेत्रोपकरणस्य च ।
भङ्गोत्क्षेपोपमर्दाद्यैः प्रथमं साहसं स्मृतम् ॥
वासःपश्वन्नधान्यानां गृहोपकरणस्य च ।
एतेनैव प्रकारेण मध्यमं साहसं स्मृतम् ॥
व्यापदो विषशस्त्राद्यैः परदारप्रधर्षणम् ।
प्राणोपरोधि यच्चान्यदुत्तमं साहसं स्मृतम् ॥
नारदः—तस्य दण्डः क्रियापेक्षः प्रथमस्य शतावरः ।
मध्यमस्य तु शास्त्रज्ञैर्दृष्टः पञ्चशतावरः ।
उत्तमे साहसे दण्डः सहस्रावर इष्यते ॥
वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने ।
तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसे ॥
याज्ञवल्क्यः—पितृपुत्रस्वसृभ्रातृदम्पत्याचार्यशिष्यकाः ।
एषामपतितानां यस्त्यागो स शतदण्डभाक् ॥
द्रव्याणि हिंस्याद्यो यस्य ज्ञानतोऽज्ञानतोऽपि वा ।
स तस्योत्पादयेत्तुष्टिं दण्डं दद्याच्च तत्समम् ॥
व्यासः—विप्रं दूष्यन्नभक्ष्येण दाप्यस्तूत्तमसाहसम् ।
क्षत्रं चार्धं विशन्त्वाद्यं शूद्रं दाप्यस्तदर्धकम् ॥
याज्ञवल्क्यः—पितापुत्रविरोधे तु साक्षिणां त्रिपणो दमः ।
मनुः—संक्रमध्वजयष्टीनां प्रतिमायाश्च भेदकः ॥
प्रतिकुर्याच्च तत्सर्वं पञ्च दद्याच्छतानि च ।
प्राकारस्य च भेत्तारं परिखायाश्च पूरकम् ॥
द्वाराणां चैव भेत्तारं क्षिप्रमेव प्रवासयेत् ।
तटागभेदकं हन्यादप्सु शुद्धवधेन वा ॥
तच्चापि प्रतिसंस्कुर्याद्दद्याच्चोत्तमसाहसम् ।
विषाग्निदां पतिगुरुनिजापत्यप्रमापणीम् ॥
विकर्णकरनासोष्ठीं कृत्वा गोभिः प्रमापयेत् ।
याज्ञवल्क्यः—क्षेत्रवेश्मग्रामखलाविवीतादेश्च दाहकाः ।
राजपत्न्याभिगामी च दग्धव्याः स्युः कटाग्निना ॥

कूटशासनकर्तृंश्च प्रकृतीनां च दूषकान् ।
स्त्रीबालब्राह्मणघ्नांश्च हन्याद्विड्सेविनस्तथा ।
व्यासः—परिक्लेशेन पूर्वः स्याद्भैषज्येन तु मध्यमः ।
प्रहारेण तु गर्भस्य पातने दण्ड उत्तमः ॥
बृहस्पतिः—मित्रप्राप्त्यर्थलोभैर्वा राज्ञा लोकहितैषिणा ।
न मोक्तव्याः साहसिकाः सर्वभूतभयावहाः ॥
बौधायनः—क्षत्रियादीनां ब्राह्मणवधे वधः सर्वस्वहरणं च तेषामेव
तुल्यापकृष्टवधे यथाबलानुरूपं दण्डं कल्पयेत् ।
बृहस्पतिः—एकं च बहवो यत्र प्रहरन्ति रुषाऽन्विताः ।
मर्मप्रहारको यस्तु घातकः स उदाहृतः ॥
मर्मघाती तु यस्तेषां यथोक्तं दापयेद्दमम् ।
आरम्भकृत्सहायाश्च दोषभाजस्तदर्धतः ॥
नारदः—अविशेषेण सर्वेषामेष दण्डविधिः स्मृतः ।
वधादृते ब्राह्मणस्य न वधं ब्राह्मणोऽर्हति ॥
शिरसो मुण्डनं दण्डस्तस्य निर्वासनं पुरात् ।
ललाटे चाभिशस्ताङ्कः प्रयाणं गर्दभेण च ।
यमः—न शारीरो ब्राह्मणस्य दण्डो भवति कर्हिंचित् ।
गुप्ते तु बन्धने बद्ध्वा राजा भक्तं प्रदापयेत् ॥
अवध्या ब्राह्मणाः सर्वे लोकेऽस्मिन् वैदिकी श्रुतिः ।
बृहस्पतिः—हतः संदृश्यते यत्र घातकस्तु न दृश्यते ।
पूर्ववैरानुमानेन ज्ञातव्यः स महीभुजा ॥
प्रतिवेश्यानुवेश्यौ च तस्य मित्रारिबान्धवाः ।
प्रष्टव्या राजपुरुषैः सामादिभिरुपक्रमैः ॥
एषोदिता घातकानां तस्कराणां च भावना ।
गृहीतः शङ्कया यस्तु न तत्कार्यं प्रपद्यते ।
शपथैः स विशोध्यस्तु सर्ववादेष्वयं विधिः ॥
बौधायनः—हास्यार्थमपि ब्राह्मण आयुधं नाऽऽदीत ।
ब्राह्मणार्थे गवार्थे वा वर्णानां वाऽपि संकरे ।
गृह्णीयातां विप्रविशौ शस्त्रं धर्मव्यतिक्रमे ॥

अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः।
क्षेत्रदारहराश्चैव षडेते आततायिनः॥
कात्यायनः—उद्यतासिविषाग्निं च चापोद्यतकरं तथा।
आर्थर्वणेन हन्तारं पिशुनं चैव राजसु॥
भार्यातिक्रम( मि )णं चैव विद्यात्सप्ताऽऽततायिनः।
मनुः—गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम्।
आततायिनमायान्तं हन्यादेवाविचारयन्॥
नाऽऽततायिवधे दोषो हन्तुर्भवति कश्चन।
प्रकाशं वाऽप्रकाशं वा मन्युस्तं मन्युमृच्छति॥
देवलः—आत्मत्यागः परत्यागात्पापीयान्पातकादपि।
पातके निष्कृतिः प्रोक्ता कथमात्मनि निष्कृतिः॥
सुमन्तुः—आततायिनि न दोषोऽन्यत्र गोब्राह्मणवधात्।
कात्यायनः—आततायिनि चोत्कृष्टे तपःस्वाध्यायजन्मतः।
वधस्तस्य तु नैव स्यात्पापहीनेऽवधो भृगुः॥
बृहस्पतिः—आततायिनमुत्कृष्टं वृत्तस्वाध्यायसंयुतम्।
यो न हन्याद्वधप्राप्तं सोऽश्वमेधफलं लभेत्॥
इति साहसप्रकरणम्।

---

अथ स्त्रीसंग्रहणप्रकरणम्।

मनुः—उपकारक्रिया केलिस्पर्शो भूषणवाससाम्।
सहखट्वासनं चैव सर्वं संग्रहणं स्मृतम्॥
बृहस्पतिः—पापमूलं संग्रहणं त्रिप्रकारं निबोधत।
बलोपधिकृते द्वे तु तृतीयमनुरागजम्॥
तत्पुनस्त्रिविधं प्रोक्तं प्रथमं मध्यमोत्तमम्।
अनिच्छन्त्या यत्क्रियते मत्तोन्मत्तप्रमत्तया॥
प्रलपन्त्या तु रहसि बलात्कारकृतं तु तत्।
छद्मना गृहमानीय दत्त्वा वा मदकारणम्॥
संयोगः क्रियते यत्स्यात्तदुपाधिकृतं विदुः।
अन्योन्यचक्षूरागेण दूतसंप्रेषणेन वा॥

कृतं रूपार्थलोभेन ज्ञेयं तदनुरागजम् ।
अपाङ्गप्रेक्षणं हास्यं दूतीसंप्रेषणं तथा ।
स्पर्शो भूषणवस्त्राणां प्रथमः संग्रहः स्मृतः ॥
प्रेषणं गन्धमाल्यानां फलमद्यान्नवाससाम् ।
संभाषणं च रहसि मध्यमं संग्रहं विदुः ॥
एकशय्यासनं क्रीडा चुम्बनालिङ्गनं तथा ।
एतत्संग्रहणं प्रोक्तमुत्तमं शास्त्रवेदिभिः ॥
त्रयाणामपि चैतेषां प्रथमो मध्यमोत्तमौ ।
विनयः कल्पनीयः स्यादधिको द्रविणाधिके ॥

मनुः—भिक्षुका बन्दिनश्चैव दीक्षिताः कारवस्तथा ।
संभाषणं गृहे स्त्रीभिः कुर्युरप्रतिवारिताः ॥
न संभाषां गृहस्त्रीभिः प्रतिषिद्धः समाचरेत् ॥
निषिद्धो भाषमाणस्तु सुवर्णं दण्डमर्हति ॥

याज्ञवल्क्यः—स्त्री निषेधे शतं दद्याद्द्विशतं तु दमं पुमान् ।
अनिषेधे तयोर्दण्डो यथा संग्रहणे तथा ॥

मनुः—परदाराभिमर्शेषु प्रवृत्तान् नृन् महीपतिः ।
उद्वेजनकरैर्दण्डैश्चिह्नयित्वा प्रवासयेत् ॥
तत्समुत्थो हि लोकस्य जायते वर्णसंकरः ।
येन मूलहतो धर्मः सर्वनाशाय कल्पते ॥
अब्राह्मणः संग्रहणे प्राणान्तं दण्डमर्हति ।
चतुर्णामपि वर्णानां दारा रक्ष्यतमाः स्मृताः ॥

बृहस्पतिः—छद्मना कामयेद्यस्तु तस्य सर्वहरो दमः ।
अङ्कयित्वा भगाङ्केन पुरान्निर्वासयेत्ततः ॥

याज्ञवल्क्यः—सजातावुत्तमो दण्ड आनुलोम्ये तु मध्यमः ।
प्रातिलोम्ये वधः पुंसां स्त्रीणां कर्णादिकृन्तनम् ॥
दमः समः समायां तु हीनायामर्धिकः स्मृतः ।
पुंसः कार्योऽधिकायां तु गमने संप्रमापणम् ॥
पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि ।
मातुः सपत्नीं भगिनीमाचार्यतनयां तथा ॥

आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः ।
छित्त्वा लिङ्गं वधस्तस्य सकामायाः स्त्रियास्तथा ॥

वसिष्ठः—शूद्रश्चेद् ब्राह्मणीमभिगच्छेद् वीरणैर्वेष्टयित्वा शूद्रमग्नौ प्रास्येत । ब्राह्मण्याः शिरो वापयित्वा सर्पिषाऽभ्यज्य नग्नां खरमारोप्य महापथमनुसंव्राजयेत् पूता भवतीति विज्ञायते । एवं वैश्यो राजन्यायां मैथुनमाचरन् शूद्रश्च राजन्यावैश्ययोः ।

मनुः—वृषलं सेवते या तु ब्राह्मणी मदमोहिता ।
तां श्वभिः खादयेद्राजा संस्थाने बहुसंस्थिते ॥
वैश्यं वा क्षत्रियं वाऽपि ब्राह्मणी सेवते तु या ।
शिरसो मुण्डनं तस्याः प्रयाणं गर्दभेन तु ॥
गृहमागत्य या नारी प्रलोभ्य स्पर्शनादिना ।
कामयेत्तत्र सा दण्ड्या नरस्यार्धदमः स्मृतः ॥
छिन्ननासोष्ठकर्णां तु परिभ्राम्याप्सु मज्जयेत् ।
खादयेद्वा सारमेयैः संस्थाने बहुसंस्थिते ॥
भर्तारं लङ्घयेद्या तु स्त्री जातिगुणदर्पिता ।
तां चाभिखादयेद्राजा संस्थाने बहुसंस्थिते ॥

बृहस्पतिः—अनिच्छन्ती तु या गुप्ता भुक्ता तां वासयेद् गृहे ।
मलिनाङ्गीमधःशय्यां पिण्डमात्रोपजीविनीम् ॥

इति स्त्रीसंग्रहणप्रकरणम् ।

---

अथ दायविभागप्रकरणम् ।

मनुः—विद्याप्राप्तं शौर्यधनं यच्च सौदायिकं भवेत् ।
विभागकाले तत्तस्य नान्वेष्टव्यं स्वरिक्थिभिः ॥
विद्याशौर्यश्रमैर्लब्धं स्त्रीधनं माधुपर्किकम् ।
मैत्रमौद्वाहिकं भ्रातुर्भ्रातृभिर्न विभज्यते ॥
क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत्तु यः ।
दायादेभ्यो न तद्दद्याद्विद्यया प्राप्तमेव च ॥

---

१ ख. व्यासः ।

परभक्तोपयोगेन विद्या प्राप्ताऽन्यतस्तु या।
तया प्राप्तं तु विधिना विद्याप्राप्तं तदुच्यते॥
शिष्यादार्त्विज्यतः प्रश्नात् संदिग्धप्रश्ननिर्णयात्।
स्वज्ञानशंसनाद्वालाल्लब्धं वाऽध्ययनाच्च यत्॥
विद्याधनं तु यत्प्राहुः सामान्यं यदतोऽन्यथा।
कात्यायनः--नाविद्यानां तु वैद्येन देयं विद्याधनं क्वचित्।
समविद्याधिकानां तु देयं वैद्येन तद्धनम्॥
नारदः--शौर्यभार्याधने हित्वा यच्च विद्याधनं क्वचित्।
त्रीण्येतान्याविभाज्यानि प्रसादो यश्च पैतृकः॥
बृहस्पतिः--पितामहपितृभ्यां च दत्तं मात्रा च यद्भवेत्।
तस्य तन्नापहर्तव्यं शौर्यभार्याधनं तथा॥
मनुः--अनुपघ्नन् पितृद्रव्यं श्रमेण यदुपार्जितम्।
स्वयमीहितलब्धं तन्नाकामो दातुमर्हति॥
वस्त्रं पत्रमलंकारं कृतान्नमुदकं स्त्रियः।
योगक्षेमं प्रचारं च न विभाज्यं प्रचक्षते।
एकां स्त्रीं कारयेत्कर्म यथांशेन गृहे गृहे॥
बह्व्यः समांशतो देया दासानामप्ययं विधिः।
नारदः--कुटुम्बं बिभृयाद्भ्रातुर्यो विद्यामधिगच्छति।
भागं विद्याधनात्तस्मात्स लभेताश्रुतोऽपि सन्।
अविद्यानां तु सर्वेषामाहृतं चेद्धनं भवेत्।
समस्तत्र विभागः स्यादपित्र्य इति धारणा॥
व्यासः--साधारणं समाश्रित्य यत्किंचिद्वाहनायुधम्।
शौर्यादिनाऽऽप्नोति धनं भ्रातरस्तस्य भागिनः॥
तस्य भागद्वयं देयं शेषास्तु समभागिनः।
पुरुषस्य स्त्रियाश्चैव धर्म्ये वर्त्मनि तिष्ठतोः॥
संयोगे विप्रयोगे च धर्मान्वक्ष्यामि शाश्वतान्।
अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम्॥
विषये सज्जमानाश्च संस्थाप्या ह्यात्मनो वशे।
रक्षेत्कन्यां पिता पृ(प्र)त्तां पतिः पुत्रस्तु वार्धके॥

अभावे ज्ञातयस्तेषां स्वातन्त्र्यं न क्वचित्स्त्रियाः।
पिता रक्षति कौमारे भर्ता रक्षति यौवने।
पुत्रश्च स्थविरे भावे न स्त्री स्वातन्त्र्यमर्हति॥
अनाख्याय ददद्दोषं दण्ड्य उत्तमसाहसम्।
अदुष्टां यस्त्यजेत्कन्यां दूषयंश्च मृषा शतम्॥
बृहस्पतिः—सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यो निवार्या स्त्री च बन्धुभिः।
स्वकामे वर्तमाना तु या स्नेहान्न निवारिता॥
अवश्या सा भवेत्पश्चाद्यथा व्याधिरुपेक्षिता (तः)।
यादृशं भजते हि स्त्री पुत्रं सूते तथाविधम्॥
अथ प्रजाविशुद्ध्यर्थं स्त्रियो रक्ष्याः प्रयत्नतः।
ऋतुस्नाता तु या नारी भर्तारं नोपगच्छति॥
तां ग्राममध्ये विख्याप्य भ्रूणघ्नीति विवासयेत्।
अप्रजां दशमे वर्षे स्त्रीप्रजां द्वादशे त्यजेत्॥
प्रेतप्रजां पञ्चदशे सद्यस्त्वप्रियवादिनीम्॥
भार्यायै व्यभिचारिण्यै परित्यागो न विद्यते।
दद्यात् पिण्डं कुचेलं च अधःशय्यां च शाययेत्॥
पूर्वोत्थानं गुरुष्वर्चा भोजनव्यञ्जनाक्रिया।
जघन्याशनशायित्वं कर्म स्त्रीणामुदाहृतम्॥
द्वारोपवेशनं नित्यं गवाक्षावेक्षणं तथा।
असत्प्रलापो हास्यं च दूषणं कुलयोषिताम्॥
क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम्।
हासं परगृहं यानं त्यजेत् प्रोषितभर्तृका॥
मृते भर्तरि या नारी समारोहेद्धुताशनम्।
साऽरुन्धतीसमा रामा स्वर्गलोके महीयते॥
पृथक्चितां समारुह्य न विप्रा गन्तुमर्हति।
देशान्तरे मृते तस्मिन् साध्वी तत्पादुकाद्वयम्॥
निधायोरसि सश्रद्धा प्रविशेज्जातवेदसम्।
तत्र सा भर्तृपरमा पराऽपरमदालसा॥

क्रीडते पतिना सार्धं यावदिन्द्राश्चतुर्दश ।
विष्णुः—मृतौ भर्तुर्ब्रह्मचर्यं तदन्वारोहणं तथा ॥
नारदः—विभागोऽर्थस्य पित्र्यस्य पुत्रैर्यत्रोपकल्प्यते ।
दायभाग इति प्रोक्तं तद्विवादपदं बुधैः ॥
ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम् ।
भजेरन् पैतृकं रिक्थमनीशास्ते हि जीवतोः ॥
देवलः—पितर्युपरते पुत्रा विभजेयुः पितुर्धनम् ।
अस्वाम्यं हि भवेत्तेषां निर्दोषे पितरि स्थिते ॥
पित्रोरभावे भ्रातॄणां विभागः संप्रदर्शितः ।
भ्रातुर्निवृत्ते रजसि जीवन्त्यामपि शस्यते ।
नारदः—मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च ॥
निवृत्ते चापि मरणात् पितर्युपरतस्पृहे ।
जीवति पितरि पुत्राणामर्थदानविसर्गाक्षेपेष्वस्वातन्त्र्यमिति ।
एवं सह वसेयुर्वा पृथग्वा धर्मकाम्यया।
पृथग्विवर्धते धर्मो यस्माद्धर्म्या पृथक्क्रिया ॥
एकपाकेन वसतां पितृदेवद्विजार्चनम् ।
एकं भवेद्विभक्तानां तदेव स्याद् गृहे गृहे ॥
क्रमागते गृहे क्षेत्रे पितृपुत्राः समांशिनः ।
याज्ञवल्क्यः—भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव च ।
तत्र स्यात् सदृशं स्वाम्यं पितुः पुत्रस्य चोभयोः ।
यदि कुर्यात् समानांशान् पत्न्यः कार्याः समांशिकाः ।
न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा ॥
मनुः—भ्रातॄणामविभक्तानां यद्युत्थानं भवेत्सह ।
न तत्र भागं विषमं पिता दद्यात्कथंचन ॥
पितैव वा स्वयं पुत्रान्विभजेद्वयसि स्थितः ।
हारीतः—जीवन्नेवाऽऽत्मधनं पुत्राणां विभज्य वनमाश्रयेत् ॥
आश्रमान्तरं वा गच्छेत् स्वल्पेन वा संविभज्य भूयिष्ठमादाय वसेत्, यद्युपदस्येत् पुनस्तेभ्यो गृह्णीयात्, क्षीणांश्च विभजेत।
व्याधितः कुपितश्चैव विषयासक्तमानसः ।
अयथाशास्त्रकारी च न विभागे पिता प्रभुः ॥

याज्ञवल्क्यः—विभागं चेत् पिता कुर्यादिच्छया विभजेत्सुतान्।
विष्णुः—पिता चेत् पुत्रान् विभजेत् तस्य स्वेच्छातः स्वयमुपात्तेऽर्थे।
नारदः—पित्रैव तु विभक्ता ये समन्यूनाधिकैर्धनैः।
एषां स एव धर्मः स्यात् सर्वस्य हि पिता प्रभुः॥
बृहस्पतिः—समन्यूनाधिका भागाः पित्रा येषां प्रकल्पिताः।
तथैव ते पालनीया विनेयाः स्युरतोऽन्यथा॥
याज्ञवल्क्यः—न्यूनाधिकविभक्तानां धर्म्यः पितृकृतः स्मृतः।
मनुः—पैतृकं तु पिता द्रव्यमनवाप्तं यदाऽऽप्नुयात्।
न तत्पुत्रैर्भजेत् सार्धमकामः स्वयमर्जितम्॥
कात्यायनः—स्वयं तूपार्जिते पुत्रो न पुनः स्वाम्यमर्हति।
पैतामहं हृतं पित्रा स्वशक्त्या यदुपार्जितम्॥
विद्याशौर्यादिना वाऽऽप्तं तत्र स्वाम्यं पितुः स्मृतम्।
प्रदानं चेच्छया कुर्यात् भोगश्चैव ततो धनात्॥
तदभावे तु दायादाः समांशाः परिकीर्तिताः।
मनुः—ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः॥
पितॄणामनृणश्चैव स तस्मात् सर्वमर्हति।
यस्मिन्नृणं संनमति येन वाऽऽनन्त्यमश्नुते॥
स एव धर्मतः पुत्रः कामजानितरान् विदुः।
पितेव पालयेत्पुत्रान् ज्येष्ठो भ्राता यवीयसः।
पुत्रवच्चापि वर्तेरन् ज्येष्ठे भ्रातरि धर्मतः।
ज्येष्ठ एव तु गृह्णीयात् पित्र्यं धनमशेषतः॥
शेषास्तमुपजीवेयुर्यथैव पितरं तथा।
यद्वा—ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम्॥
ततोऽर्धं मध्यमस्य स्यात्तुरीयं तु यवीयसः।
यमयोश्चैव गर्भे तु जन्मतो ज्येष्ठता मता॥
एवं समुद्धृतोद्धारे समानांशान् प्रकल्पयेत्।
याज्ञवल्क्यः—विभजेरन् सुताः पित्रोरूर्ध्वमृक्थमृणं समम्।
नारदः—समानभागिनी माता पुत्राणां स्यान्मृते धवे॥

व्यासः—असुतास्तु पितुः पत्न्यः समानांशाः प्रकीर्तिताः।
पितामह्यश्च सर्वास्ता मातृतुल्याः प्रकीर्तिताः॥
जननी त्वधना पुत्रैर्विभागांशं समं हरेत्।
याज्ञवल्क्यः—अनेकपितृकाणां तु पितृतो दायकल्पना॥
तत्पुत्रा विषमसमाः पितृभागहराः स्मृताः।
अविभक्तेऽनुजे प्रेते तत्सुतं रिक्थभागिनम्॥
कुर्वीत जीवनं येन लब्धं नैव पितामहात्।
लभेतांशं स्वपित्र्यं तु पितृव्यात्तस्य वा सुतात्॥
स एवांशस्तु सर्वेषां भ्रातॄणां न्यायतो भवेत्।
लभेत तत्सुतो वाऽपि निवृत्तिः परतो भवेत्॥
देवलः—अविभक्तविभक्तानां कुल्यानां वसतां सह।
भूयो दायविभागः स्यादाचतुर्थादिति स्थितिः॥
विधिरेष सवर्णानां बहूनां समुदाहृतः।
यत एवासवर्णस्य दायोऽप्यत्र न विद्यते॥
मनुः—भ्रातॄणां यस्तु नेहेत धनं शक्तः स्वकर्मणा।
स विभाज्यः स्वकादंशात् किंचिद्दत्त्वोपजीवनम्॥
याज्ञवल्क्यः—शक्तस्यानीहमानस्य किंचिद्दत्त्वा पृथक्क्रिया।
आपस्तम्बः—सर्वे धर्मयुक्ता रिक्थभागिनः, यस्त्वधर्मेण प्रतिपादयति ज्येष्ठमपि तमभागिनं कुर्वीत।
बृहस्पतिः—असवर्णासुतो यस्तु नार्हः स्यात्पैतृके धने।
तत्पिण्डकाः श्रोत्रिया ये तेषां तदभिधीयते॥
उत्तमर्णाधमर्णेभ्यः पितरं त्रायते सुतः।
अतस्तु विपरीतेन तेन नास्ति प्रयोजनम्।
तया गवा किं क्रियते या तु धेनुर्न गर्भिणी॥
कोऽर्थः पुत्रेण जातेन यो न विद्वान् न धार्मिकः।
शास्त्रशौचार्थरहितस्तपोविज्ञानवर्जितः॥
आचारहीनः पुत्रस्तु मूत्रोच्चारसमः स्मृतः।
याज्ञवल्क्यः—पतितस्तत्सुतः क्लीबः पङ्गुरुन्मत्तको जडः।
अन्धोऽचिकित्स्यरोगश्च भर्तव्यास्तु निरंशकाः॥

औरसाः क्षेत्रजास्तेषां निर्दोषा भागहारिणः।
सुताश्चैषां प्रभर्तव्या यावद्वै भर्तृसात्कृताः॥
अपुत्रयोषितश्चैषां भर्तव्याः साधुवृत्तयः।
निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च॥

वसिष्ठः—अनंशास्त्वाश्रमान्तरगताः क्लीबोन्मत्तपतिताश्च भरणं क्लीबोन्मत्तानाम्।

नारदः—येषां तु न कृताः पित्रा संस्कारविधयः क्रमात्।
कर्तव्या भ्रातृभिस्तेषां पैतृकादेव ते धनात्॥
अविद्यमाने पित्र्येऽर्थे स्वांशादुद्धृत्य वा पुनः।
अवश्यकार्या भ्रातॄणां संस्काराः पूर्वसंस्कृतैः॥

याज्ञवल्क्यः—असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः।
भगिन्यश्च निजादंशाद्दत्त्वांऽशं तु तुरीयकम्।
कन्यकानां त्वभर्तॄणां चतुर्थो भाग इष्यते।
भ्रातॄणां च त्रयो भागाः समः स्वल्पधने स्मृतः॥
स्वेभ्योंऽशेभ्यस्तु कन्यायाः प्रदद्युर्भ्रातरः पृथक्।
स्वात्स्वादंशाच्चतुर्भागं पतिताः स्युरदित्सवः॥

शङ्खः—विभज्यमाने दायार्थे कन्यालंकारं वैवाहिकं स्त्रीधनं च कन्या लभते।

बौधायनः—मातुरलंकारं दुहितरः सांप्रदायिकं लभेरन्।
पैतामहं च पित्र्यं च यच्चान्यत् स्वयमार्जितम्।
दायादानां विभागे तु सर्वमेतद्विभज्यते॥
यच्छिष्टं पितृदायेभ्यो दत्वर्णं पैतृकं च यत्।
भ्रातृभिस्तद्विभक्तव्यमृणी न स्याद्यथा पिता॥
जङ्गमं स्थावरं हेम कुप्यं धान्यमथाम्बरम्।
आदाय दापयेच्छ्राद्धं मासषाण्मासिकाब्दिकम्।
रिक्थं प्रीतिप्रदानं तु दत्त्वा शेषं विभाजयेत्।
धर्मार्थं प्रीतिदत्तं च यद्दणं स्वनियोजितम्॥
तद्दृश्यमानं विभजेन्न दानं पैतृकाद्धनात्।
काले विनीतविद्यानां भ्रातृभ्यः पितृतोऽपि वा॥

तया प्राप्तं तु यद्वित्तं विभाज्यं तद् बृहस्पतिः ।
गृहोपस्करवाह्याश्च दोह्याभरणकर्मिणः ॥
दृश्यमाना विभज्यन्ते कोशं गूढेऽब्रवीद् भृगुः ।
अध्यग्न्यध्याहवनिकं दत्तं च प्रीतिकर्माणि ॥
भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम् ।
पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम् ॥
आधिवेदनिकाद्यं च स्त्रीधनं परिकीर्तितम् ।
वृत्तिराभरणं शुल्कं लाभश्च स्त्रीधनं भवेत् ॥

कात्यायनः—विवाहकाले यत् स्त्रीभ्यो दीयते ह्यग्निसंनिधौ ।
तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्तितम् ॥
यत् पुनर्लभते नारी दीयमाना पितुर्गृहात् ।
अध्याहवनिकं नाम स्त्रीधनं परिकीर्तितम् ॥
प्रत्यादत्तं च यत्किंचित् श्वश्र्वा वा श्वशुरेण वा ।
पादवन्दनिकं चैव प्रीतिदत्तं तदुच्यते ।
ऊढया कन्यया वाऽपि भर्तुः पितृगृहेऽपि वा ।
भ्रातुः सकाशात् पित्रोर्वा लब्धं सौदायिकं स्मृतम् ॥
विवाहात् परतो यत्तु लब्धं भर्तृकुलात् स्त्रिया ।
अन्वाधेयं तदुक्तं तल्लब्धं बन्धुकुलात्तथा ॥
गृहोपस्करवाह्यानां दोह्याभरणकर्मिणाम् ।
मूलं लब्धं तु यत्किंचित् शुल्कं तत् परिकीर्तितम् ॥
भर्तुर्दायं मृते पत्यौ विन्यसेत् स्त्री यथेष्टतः ।
विद्यमाने तु संरक्षेत् क्षेपयेत्तत् कुलेऽन्यथा ॥
न भर्त्ता नैव च सुतो न पिता भ्रातरो न च ।
आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः ॥
यदि ह्येकतरश्चैषां स्त्रीधनं स्वेच्छया हरेत् ।
स वृद्धिं प्रति दाप्यः स्याद्दण्डं चैव समाप्नुयात् ॥
तदेव यद्यनुज्ञाप्य भक्षयेत् प्रीतिपूर्वकम् ।
मूलमेव तदा दद्याद्यद्यसौ धनवान् भवेत् ।

याज्ञवल्क्यः—दुर्भिक्षे धर्मकार्ये च व्याधौ संप्रतिरोधने ।
गृहीतं स्त्रीधनं भर्ता नाकामो दातुमर्हति ॥

कात्यायनः—अपकारकृताऽयुक्ता निर्लज्जा वाऽर्थनाशिनी।
व्यभिचाररता या च स्त्रीधनं न च साऽर्हति॥
पित्रा प्रतिश्रुतं देयमृणवत् स्त्रीधनं सुतैः।
अतीतायामप्रजस्त्रीबान्धवास्तदवाप्नुयुः॥
याज्ञवल्क्यः—अप्रजस्त्रीधनं भर्तुर्ब्राह्मादिषु चतुर्ष्वपि।
दुहितॄणां प्रसूता चेच्छेषेषु पितृगामि तत्॥
मनुः—ब्राह्मदैवार्षगान्धर्वप्राजापत्येषु यद्धनम्।
अतीतायामप्रजस्त्रीभर्तुरेव तदिष्यते॥
स्त्रीधनं तदपत्यानां भर्तृगाम्यप्रजस्त्रियाः।
ब्राह्मादिषु चतुर्ष्वाहुः पितृगामि तदेषु च॥
यत्त्वस्यै स्याद्धनं दत्तं विवाहेष्वासुरादिषु।
अप्रजायामतीतायां मातापित्रोस्तदिष्यते॥
बन्धुदत्तं तु बन्धूनामभावे भ्रातृगामि तत्।
भागिन्यो बान्धवैः सार्धं विभजेयुः सभर्तृकाः॥
बन्धुदत्तं तथा शुल्कमन्वाधेयकमेव च।
अप्रजायामतीतायां बान्धवास्तदवाप्नुयुः॥
गौतमः—स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां चेति।
भगिनीशुल्कः सोदर्याणामूर्ध्वं मातुः।
मनुः—यास्तासां स्युर्दुहितरस्तासामपि यथार्हतः।
मातामहीधनात् किंचित् प्रदेयं प्रीतिपूर्वकम्॥
मातुर्दुहितरोऽभावे दुहितॄणां तदन्वयः।
स्त्रियास्तु यद्भवेद्वित्तं पित्रा दत्तं कथंचन।
ब्राह्मणी तद्धरेत् कन्या तदपत्यस्य वा भवेत्॥
दत्त्वा कन्यां हरन् दाप्यो व्ययं दाप्यं च सोऽभयम्।
दत्तामपि हरेत्कन्यां श्रेयांश्चेद्वर आव्रजेत्॥
मृतायां दत्तमादद्यात् परिशोध्योभयव्ययम्।
रिक्थं मृतायाः कन्याया गृह्णीयुः स्वोदराः स्वयम्॥
तदभावे भवेन्मातुस्तदभावे पितुर्भवेत्।
मातृष्वसा मातुलानी पितृव्यस्त्री पितृष्वसा॥

श्वश्रूः पूर्वजपत्नी च मातृतुल्याः प्रकीर्तिताः ।
यदाऽऽसामौरसो न स्यात् सुतो दौहित्र एव वा ॥

तत्सुतो वा धनं तासां स्वस्त्रीयाद्याः समाप्नुयुः ।
ऋणे धने च सर्वस्मिन् प्रविभक्ते यथाविधि ॥

पश्चाद् दृश्येत यत्किंचित् तत्सर्वं समतां नयेत् ।
कात्यायनः—अन्योन्यापहृतं द्रव्यं दुर्विभक्तं च यद्भवेत् ।
पश्चात् प्राप्तं विभज्येत समभागेन तद् भृगुः ॥

मनुः—स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादयेत्तु यम् ।
तमौरसं विजानीयात् पुत्रं प्रथमकल्पितम् ॥

माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ।
सदृशप्रीतिसंयुक्तौ स ज्ञेयो दत्त्रिमः सुतः ॥

उपपन्नो गुणैः सर्वैः पुत्रो यस्य तु दत्त्रिमः ।
स हरेदेव तद्रिक्थं संप्राप्तोऽप्यन्यगोत्रतः ॥

गोत्ररिक्थे जनयितुर्न हरेद्दात्त्रिमः सुतः ।
वसिष्ठः—तस्मिंश्चेत् प्रतिगृह्णीत औरसः पुत्र उत्पद्येत स चतुर्थभागी स्यात् ।

भ्रातॄणामेकजातानामेकश्चेत् पुत्रवान् भवेत् ।
सर्वे तेनैव पुत्रेण पुत्रिणो मनुरब्रवीत् ॥

स्त्रीणामप्येकजायानामेका चेत्पुत्रिणी भवेत् ।
सर्वास्तास्तेन पुत्रेण पुत्रिण्यो मनुरब्रवीत् ॥

बृहस्पतिः—बह्वीनामेकपत्नीनामेष एव विधिः स्मृतः ।
एका चेत् पुत्रिणी तासां सर्वासां पिण्डदस्तु सः ॥

मनुः—पुंनाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः ।
तस्मात् पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा ॥

ऋणमस्मिन् संनयति अमृतत्वं च गच्छति ।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥

मनुवसिष्ठौ—पुत्रेण लोकाञ्जयति पौत्रेणाऽऽनन्त्यमश्नुते ।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याऽऽप्नोति विष्टपम् ॥

बृहस्पतिः—यथा जलं कुप्लवेन तरन् मज्जति मानवः।
तद्वत् पिता कुपुत्रेण तमस्यन्धे निमज्जति॥
मनुः—यादृशं गुणमाप्नोति कुप्लवैः संतरन् जलम्।
तादृशं गुणमाप्नोति कुपुत्रैः संतरन् तमः॥
अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता।
पत्ये प्रदद्यात्तद्वित्तं कृत्स्नमंशं लभेत च॥
आम्नाये स्मृतितन्त्रे च लोकाचारे च सूरिभिः।
शरीरार्धं स्मृता जाया पुण्यापुण्यफले समा॥
यस्य नोपरता भार्या देहार्धं तस्य जीवति।
जीवत्यर्धशरीरेऽर्थं कथमन्यः समाप्नुयात्॥
कुल्येषु विद्यमानेषु पितृभ्रातृसनाभिषु।
असुतस्य प्रमतिस्य पत्नी तद्भागहारिणी॥
बृहस्पतिः—तत्सपिण्डा बान्धवा ये तस्याश्च परिपन्थिनः।
हिंस्युर्धनानि तान् राजा चोरदण्डेन दण्डयेत्॥
कात्यायनः--पत्नी भर्तुर्धनहरी या स्यादव्यभिचारिणी।
तदभावे तु दुहिता यद्यनूढा भवेत्तदा॥
पुत्राभावे तु दुहिता तुल्यसंतानदर्शनात।
पुत्रश्च दुहिता चोभौ पितुः संतानकारकौ॥
यथैवाऽऽत्मा तथा पुत्रः पुत्रेण दुहिता समा।
तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत्॥
अङ्गादङ्गात् संभवति पुत्रवद्दुहिता नृणाम्।
तस्या पितृधनं त्वन्यः कथं गृह्णीत मानवः॥
विष्णुः—अपुत्रपुत्रसंताने दौहित्रा धनमाप्नुयुः।
सर्वेषां तु स्वधाकारे पौत्रदौहित्रकौ मतौ॥
पौत्रदौहित्रयोर्लोके विशेषो नास्ति धर्मतः।
धवलः—ततो दायमपुत्रस्य विभजेरन्सहोदराः॥
बृहस्पतिः—भार्यासुतविहीनस्य तनयस्य मृतस्य तु।
माता रिक्थहरी ज्ञेया भ्राता वा तदनुज्ञया॥

मनुः—अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात् ।
पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा ॥
शङ्खः—अपुत्रस्य स्वर्यातस्य भ्रातृगामि द्रव्यम् ।
याज्ञवल्क्यः—पत्नी दुहितरश्चैव पितरौ भ्रातरोऽपि वा ॥
तत्सुता गोत्रजा बन्धुः शिष्यः सब्रह्मचारिणः ।
एषामभावे पूर्वस्य धनभागुत्तरोत्तरः ॥
स्वर्यातस्य ह्यपुत्रस्य सर्ववर्णेष्वयं विधिः ।
विष्णुः—अपुत्रस्य प्रमीतस्य धनं पत्न्यभिगामि तत् ॥
तदभावे क्रमाद्दुहितृमातृपितृभ्रातृपुत्रसकुल्यबन्धु-
सहाध्यायिगामि तेषामप्यभावे ब्राह्मणधनवर्जं राजगामि ।
ब्राह्मणधनं ब्राह्मणा एव गृह्णीयुः ।
अहार्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिः ॥
इतरेषां तु वर्णानां सर्वाभावे हरेन्नृपः ।
देवलः—सर्वत्र दायकं राजा हरेद्ब्रह्मस्ववर्जितम् ॥
अदायकं तु ब्रह्मस्वं ब्राह्मणेभ्यः प्रदापयेत् ।
याज्ञवल्क्यः—वानप्रस्थयतिब्रह्मचारिणां रिक्थभागिनः ।
क्रमेणाऽऽचार्यसच्छिष्यधर्मपात्रैकतीर्थिनः ॥
मनुः—विभक्ताः सह जीवन्तो विभजेरन्पुनर्यदि ।
समस्तत्र विभागः स्याज्ज्येष्ठं तत्र न विद्यते ॥
येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः ।
म्रियेतान्यतरो वाऽपि तस्य भागो न लुप्यते ॥
सोदर्या विभजेयुस्तं समेत्य सहिताः समम् ।
भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभयः ॥
संसृष्टानां तु यः कश्चिद्विद्याशौर्यादिना धनम् ।
प्राप्नोति तस्य दातव्यो द्व्यंशः शेषाः समांशिनः ॥
नारदः—भ्रातॄणामप्रजः प्रेयात्कश्चिच्चेत्प्रव्रजेत वा ।
विभजेयुर्धनं तस्य शेषास्तु स्त्रीधनं विना ॥
भरणं चास्य कुर्वीरन्स्त्रीणामाजीवितक्षयात् ।
रक्षन्ति शय्यां भर्तुश्चेदाच्छिद्युरितरासु च ॥

अन्योदर्यस्तु संसृष्टी नान्योदर्यधनं हरेत् ।
असंसृष्टयपि चाऽऽदद्यात्सोदरो नान्यमातृजः ॥
संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः ।
दद्याच्चापहरेच्चांशं जातस्य च मृतस्य च ॥
विभक्तो यः पुनः पित्रा भ्राता वैकत्र संस्थितः ।
पितृव्येणाथवा प्रीत्या तत्संसृष्टः स उच्यते ॥
या तस्य भगिनी सा तु ततोऽशं लब्धुमर्हति ।
अनपत्यस्य धर्मोऽयमभार्यापितृकस्य च ॥
विभागधर्मसंदेहे दायादानां विनिर्णयः ।
ज्ञातिभिर्भागलेख्येन पृथक्कार्यप्रवर्तनात् ॥
साक्षित्वं प्रतिभाव्यं च दानं ग्रहणमेव च ।
विभक्ता भ्रातरः कुर्युर्नाविभक्ताः परस्परम् ॥

बृहस्पतिः—पृथगायव्ययधनाः कुसीदं च परस्परम् ।
वणिक्पथं च ये कुर्युर्विभक्तास्ते न संशयः ॥
येषामेताः क्रिया लोके प्रवर्तन्ते स्वरिक्थिषु ।
विभक्तानन्वगच्छेयुर्लेख्यं वाऽप्यन्तरेण तान् ॥

बृहस्पतिः—येनांशो यादृशो भुक्तस्तस्य तन्न विचारयेत् ।
स्वेच्छाकृतविभागो यः पुनरेव विसंवदेत् ॥
स राज्ञांऽशे स्वके स्थाप्य शासनीयोऽनुबन्धतः ॥

इति दायविभागप्रकरणम् ।

----

## अथ द्यूतसमाह्वयप्रकरणम् ।

नारदः—अक्षवद्ध्रशलाकाद्यैर्देवनं जिह्मकारितम् ।
पणक्रीडावयोभिश्च पदं द्यूतसमाह्वयम् ॥

बृहस्पतिः—अन्योन्यं परिगृह्णन्तः पक्षिमेषमृगादयः ।
प्रहरन्ते कृतपणास्तं वदन्ति समाह्वयम् ।
द्यूतं समाह्वयं चैव राजा राष्ट्रान्निवारयेत् ॥
राज्यस्यान्तकरावेतौ द्वौ दोषौ पृथिवीक्षिताम् ।
द्यूतं समाह्वयं चैवं यः कुर्याद्यश्च कारयेत् ॥

१ ख. °तप्राणा° ।

तान्सर्वान्घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः ।
कात्यायनः–वर्तते चेत्प्रकाशं तद्द्वारबान्धिततोरणम् ॥
असंमोहार्थमार्याणां कारयेत्तत्करप्रदम् ।
याज्ञवल्क्यः–गृहे शतिकवृद्धेस्तु सभिकः पञ्चकं शतम् ।
गृह्णीयाद्धूर्तकितवादितराद्दशकं शतम् ॥
कात्यायनः–जेतुर्द्रव्यात्स्वकं द्रव्यं जितं ग्राह्यं त्रिपक्षतः ।
सद्यो वा सभिकेनैव कितवात्तु न संशयः ॥
सभिकः कारयेद्द्यूतं देयं दद्याच्च तद्धनम् ।
प्राप्ते नृपातिभागे तु प्रसिद्धे धूर्तमण्डले ॥
जितं ससभिकस्थाने दापयेदन्यथा न तत् ।
याज्ञवल्क्यः–द्रष्टारो व्यवहाराणां साक्षिणश्च तथैव हि ।
राज्ञा सचिह्ना निर्वास्याः कूटाक्षाः पथि देविनः ॥
कूटाक्षदेविनः पापान्राजा राष्ट्राद्विवासयेत् ।
कण्ठेऽक्षमालामासज्य स ह्येषां विनयः स्मृतः ॥
एष एव विधिर्ज्ञेयः प्राणिद्यूते समाह्वये ।
इति द्यूतसमाह्वयप्रकरणम् ।

---

## अथ प्रकीर्णकप्रकरणम् ।

नारदः–प्रकीर्णके पुनर्ज्ञेया व्यवहारा नृपाश्रयाः ।
राज्ञामाज्ञाप्रतीघातस्तत्कर्मकरणं तथा ।
पुनः प्रमाणसंभेदं प्रकृतीनां तथैव च ॥
पाषण्डनैगमश्रेणिगणधर्मविपर्ययाः ।
पितृपुत्रविवादश्च प्रायश्चित्तव्यतिक्रमः ॥
प्रतिग्रहविलोपश्च लोपश्चाऽऽश्रमिणामपि ।
वर्णसंकरदोषश्च तद्वृत्तिनियमस्तथा ॥
न दृष्टं यच्च पूर्वेषु सर्वं तत्स्यात्प्रकीर्णकम् ।
कात्यायनः–राजधर्मांश्च दण्डांश्च संदिग्धानां विशेषणम् ।
प्रागुक्तं तस्य शेषं च वक्ष्यामीह प्रकीर्णके ॥
नारदः–राजा तु विधितः सर्वानाश्रमान्परिपालयेत् ।
उपायैः शास्त्रविहितैश्चतुर्भिः प्रकृतैस्तथा ॥

राजमूलमिदं राष्ट्रं ब्रह्मक्षत्रपुरोगमम्।
स्थिते राजनि धर्मे तु दुराचारं न कुर्वते॥

पितामहः—पञ्च रूपाणि राजानो धारयन्ति महौजसः।
अग्नेरिन्द्रस्य सोमस्य यमस्य धनदस्य च॥
अकारणान्निमित्ताद्वा यदा क्रोधवशं गतः।
प्रजां दहति भूपालस्तदाऽग्निरभिधीयते॥
यदा तेजः समालम्ब्य विजिगीषुरुदायुधः।
अभियाति परान्राजा तदेन्द्रः समुदाहृतः॥
विगतक्रोधसंतापो हृष्टपुष्टोदयो नृपः।
प्रजानां दर्शनं याति सोम इत्युच्यते तदा।
धर्मासनगतः श्रीमान्दण्डं धत्ते यदा नृपः॥
समः सर्वेषु भूतेषु तदा वैवस्वतो यमः।
यदाऽतिथिगुरुप्राज्ञज्ञात्यादीनवनीपतिः॥
अनुगृह्णाति दानेन तदाऽसौ धनदः स्मृतः।
तस्मात्तं नावजानीयान्नातिक्रामेद्विशेषतः॥
आज्ञायां चास्य तिष्ठेत दोषः स्यात्तद्व्यतिक्रमे।

यमः—यत्किंचित्कुरुते राजा शुभं वा यदि वाऽशुभम्॥
भृत्यास्तदनुकुर्वन्ति नर्तकयो नर्तकं यथा॥

गौतमः—वर्णानाश्रमांश्च न्यायतोऽभिरक्षेच्चलतश्चैनान्।
स्वधर्मे स्थापयेत्, धर्मस्य ह्यंशभाग्भवतीति विज्ञायते॥

वसिष्ठः—त्रयो वर्णा ब्राह्मणस्य निदेशे वर्तेरन्ब्राह्मणो धर्मान्ब्रूयात्।
राजा चानुशिष्यात्॥

मनुः—गुरुरात्मवतां शास्ता शास्ता राजा दुरात्मनाम्।
इह प्रच्छन्नपापानां शास्ता वैवस्वतो यमः॥

हरिः—गुरुभिर्ये न शास्यन्ते राज्ञो(ज्ञा) वा गूढकिल्बिषाः।
ते नरा यमदण्डेन शास्या यान्त्यधमां गतिम्॥

याज्ञवल्क्यः—ज्ञात्वाऽपराधं दोषं च कालं बलमथापि वा।
वयः कर्म च वित्तं च दण्डं दण्ड्येषु पातयेत्।

मनुः—पिताऽऽचार्यः सुहृन्माता भार्या पुत्रः पुरोहितः॥

नादण्ड्यो नाम राज्ञोऽस्ति यः स्वधर्मे न तिष्ठति।

शङ्खः-अदण्ड्यौ मातापितरौ स्नातकपुरोहितौ परिव्राजक-
वानप्रस्थौ जन्मकर्मश्रुतशीलाचारवन्तश्च ये च धर्म-
वृद्धिकरा राज्ञा स्त्रीबालवृद्धास्तपस्विनस्तेभ्यः क्रोधं
नियच्छेत्।

बृहस्पतिः-गुरून्पुरोहितांश्चैव वाग्दण्डेनैव दण्डयेत्।
विवादिनो नरांश्चान्यान्दोषिणोऽर्थैश्च दण्डयेत्॥

महापातकयुक्तांश्च वधदण्डेन दण्डयेत्।

बृहस्पतिः-वाग्धिग्धनं वधश्चैव चतुर्धा कल्पितो दमः।

मनुः-वाग्दण्डं प्रथमं कुर्यात् धिग्दण्डं तदनन्तरम्॥
तृतीयं धनदण्डं तु वधदण्डमतः परम्।

याज्ञवल्क्यः-वाग्दण्डस्त्वथ धिग्दण्डो धनदण्डो वधस्तथा।
योज्या व्यस्ताः समस्ता वा अपराधवशादिमे॥

मनुः-दश स्थानानि दण्डस्य मनुः स्वायंभुवोऽब्रवीत्।
त्रिषु वर्णेषु तानि स्युरक्षतो ब्राह्मणो व्रजेत्॥
उपस्थमुदरं जिह्वां हस्तौ पादौ च पञ्चमः।
चक्षुर्नासा च कर्णौ च धनं देहस्तथैव च॥
ललाटाङ्को ब्राह्मणस्य नान्यो दण्डो विधीयते।

यमः-जगत् सर्वमिदं हन्यात् ब्राह्मणस्य वधे कृते॥
तस्मात्तस्य वधं राजा मनसाऽपि न चिन्तयेत्।

हारीतः-न त्वङ्गभेदं विप्रस्य प्रवदन्ति मनीषिणः।
तपसा चेज्यया चैव ब्राह्मणः पूज्यते सदा॥

मनुः-न ब्राह्मणवधाद् भूयानधर्मो विद्यते क्वचित्।

बृहस्पतिः-महापातकयुक्तोऽपि न विप्रो वधमर्हति॥
निर्वासनाङ्कितं कुर्यान्मौण्ड्यं तस्य नराधिपः।
ब्रह्महा च सुरापश्च तस्करो गुरुतल्पगः॥
एते सर्वे पृथग् ज्ञेया महापातकिनो नराः।
चतुर्णामपि चैतेषां प्रायश्चित्तमकुर्वताम्॥

---

१ ख० °धस्त्वथ।

शरीरधनसंयुक्तं दण्डं धर्म्यं प्रकल्पयेत् ।
गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः ॥
स्तेये तु श्वपदं कार्यं ब्रह्महण्याशिराः पुमान् ।
असंभोज्या ह्यसंयोज्यास्त्वसंभाष्याऽविवाहिनः ॥
चरेयुः पृथिवीं हीनाः सर्वधर्मबहिष्कृताः ।
ज्ञातिसंबन्धिभिस्त्वेते त्यक्तव्याः कृतलक्षणाः ॥
निर्दया निर्नमस्कारास्ते मनोरनुशासनम् ।
प्रायश्चित्तं तु कुर्वाणाः पूर्वे वर्णा यथोदितम् ॥
नाङ्क्या राज्ञा ललाटे स्युर्दाप्यास्तूत्तमसाहसम् ।
आगःसु ब्राह्मणस्तेषु कार्यो मध्यमसाहसम् ॥
निर्वास्यो वा भवेद्राष्ट्रात् सद्रव्यः सपरिच्छदः ।
इतरे कृतवन्तस्तु पापान्येतान्यकामतः ॥
सर्वस्वहारमर्हन्ति कामतस्तु प्रवासनम् ।
ब्राह्मणस्यापराधेषु चतुर्ष्वेवं विधीयते ॥
शिरसो मुण्डनं दण्डं पुरान्निर्वासनं तथा ।
प्रख्यापनार्थं पापस्य प्रयाणं गर्दभेन च ॥
ललाटे चिह्नकरणं कुर्याद्राजा यथाविधि ।

मनुः—हितार्थे सर्वभूतानां गोप्तारं धर्ममात्मनः ।
ब्रह्मतेजोमयं दण्डमसृजत् पूर्वमीश्वरः ॥
दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति ।
दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥

याज्ञवल्क्यः—यथाशास्त्रं प्रयुक्तः सन् सदेवासुरमानुषम् ।
जगदानन्दयेत्सर्वमन्यथा तु प्रकोपयेत् ॥

नारदः—यदि राजा न सर्वेषां वर्णानां दण्डधारणम् ।
कुर्यात् पथो व्यपेतानां विनश्येयुरिमाः प्रजाः ॥

याज्ञवल्क्यः—यो दण्ड्यान् दण्डयेद्राजा सम्यग्वध्यांश्च घातयेत् ।
इष्टं स्यात् क्रतुभिस्तेन सहस्रशतदक्षिणैः ।
अदण्ड्यदण्डनं लोके यशोघ्नं कीर्तिनाशनम् ।
अस्वर्ग्यं च परत्रापि तस्मात्तत् परिवर्जयेत् ॥

मनुः—समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि।
स द्वौ कार्षापणौ दद्यादमेध्यं चाऽऽशु शोधयेत्॥
आपद्गतस्तथा वृद्धा गर्भिणी बाल एव च।
कार्षापणं न तेऽर्हन्ति तच्च शोध्यमिति स्थितिः॥
कात्यायनः—सद्वृत्तानां तु सर्वेषामपराधो यदा भवेत्।
अवशेनैव दैवात्तु न दण्डं तत्र कल्पयेत्॥
शारीरश्चार्थदण्डश्च दण्डस्तु द्विविधः स्मृतः।
शारीरो द्विविधः प्रोक्तस्त्वर्थदण्डोऽप्यनेकधा॥
शारीरस्तूपरोधादिर्जीवितान्तकरस्तथा।
काकण्यादिस्त्वर्थदण्डः सर्वस्वहरणान्तकः॥
कार्षापणं भवेद्दण्ड्यो यत्रान्यः प्राकृतो जनः।
तत्र राजा भवेद्दण्ड्यः सहस्रमिति धारणा॥
परतन्त्रास्तु ये केचिद्दासत्वे ये च संस्थिताः।
अनाथास्ते तु निर्दिष्टास्तेषां दण्डस्तु ताडनम्॥
ताडनं बन्धनं चैव तथैव च निपीडनम्।
एष दण्डो हि दासस्य नार्थदण्डो विधीयते॥
आयुधान्यायुधीयानां बीजानि कृषिजीविनाम्।
वेश्यास्त्रीणामलंकारानायुधानि च तद्विदाम्॥
यस्य यच्चोपकरणं येन जीवन्ति कारवः।
सर्वस्वहरणेऽप्येतान् न राजा हर्तुमर्हति॥
काश्यपः—सुवर्णशतमेकं तु वधार्हो दण्डमर्हति।
अङ्गच्छेदी तदर्धं तु विवास्यः पञ्चविंशकम्॥
निर्धना बन्धने स्थाप्या बलं नैव प्रवर्तयेत्।
सर्वेषां पापयुक्तानां विशेषार्थश्च शास्त्रतः॥
मनुः—क्षत्रविट्शूद्रयोनिस्तु दण्डं दातुमशक्नुवन्।
आनृण्यं कर्मणा गच्छेद्विप्रो दद्याच्छनैः शनैः॥
न बालोन्मत्तवृद्धानां दरिद्राणां च रोगिणाम्।
शिफाद्विदलरज्ज्वाद्यैर्विदध्यान्नृपतिर्दमम्॥
आङ्गिराः—आत्मानं घातयेद्यस्तु रज्ज्वादिभिरुपक्रमैः।
मृतोऽमेध्येन लि(ले)प्तव्यो जीवेच्चेद् द्विशतो दमः॥

बृहस्पतिः—विषोद्बन्धनशस्त्रेण यस्त्वात्मानं प्रमापयेत् ।
मृतोऽमेध्येन लि(ले)प्तव्यो नाग्निसंस्कारमर्हति ॥
तटाकोद्यानकूपादि योऽमेध्येन विदूषयेत् ।
अमेध्यं शोधयित्वा तद्दण्डयेत्तं पणान् शतम् ॥
नाऽऽददीत नृपः साधुर्महापातकिनां धनम् ।
आददानस्तु तल्लोभात्तेन दोषेण लिप्यते ॥
अप्सु प्रक्षिपयेद्दण्डं वरुणायोपपादयेत् ।
श्रुतवृत्तोपपन्ने वा ब्राह्मणे प्रतिपादयेत् ॥
ईशो दण्डस्य वरुणो राज्ञां दण्डधरो हि सः ।
ईशः सर्वस्य जगतो ब्राह्मणो वेदपारगः ॥
एवं धर्मप्रवृत्तस्य राज्ञो दण्डधरस्य च ।
यशोऽस्मिन् प्रथमे( ते ) लोके स्वर्गवासस्तथा स्मृतः ॥
मनुः—एवं सर्वानिमान् राजा व्यवहारान् समापयन् ।
व्यपोह्य किल्बिषं सर्वं प्राप्नोति परमां गतिम् ॥
इति प्रकीर्णकप्रकरणम् ॥

---

इति व्यवहारमाला समाप्ता ।

---